नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण
मम चापगुणानुमुक्तैर्बाणजालैर्निरन्तरम् ४५
अर्दितं मम नाराचैर्ध्वस्तभ्रान्तमृगद्विजम्
समाकुलममर्यादं जगत्पश्याद्य लक्ष्मण ४६
आकर्णपूर्णैरिषुभिर्जीवलोकं दुरावरैः
करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् ४७
मम रोषप्रयुक्तानां सायकानां बलं सुराः
द्रक्ष्यन्त्यद्य विमुक्तानाममर्षाद्दूरगामिनाम् ४८
नैव देवा न दैतेया न पिशाचा न राक्षसाः
भविष्यन्ति मम क्रोधात्त्रैलोक्ये विप्रणासिते ४९
देवदानवयक्षाणां लोका ये रक्षसामपि
बहुधा निपतिष्यन्ति बाणौघैः शकलीकृताः
निर्मर्यादानिमाँल्लोकान्करिष्याम्यद्य सायकैः ५०
यथा जरा यथा मृत्युर्यथा कालो यथा विधिः
नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण
तथाहं क्रोधसंयुक्तो न निवार्योऽस्म्यसंशयम् ५१
पुरेव मे चारुदतीमनिन्दितां
दिशन्ति सीतां यदि नाद्य मैथिलीम्
सदेवगन्धर्वमनुष्यपन्नगं
जगत्सशैलं परिवर्तयाम्यहम् ५२
इति श्रीरामायणे अरण्यकाण्डे षष्टितमः सर्गः ६०

३-६१

तप्यमानं तथा रामं सीताहरणकर्शितम्
लोकानामभवे युक्तं सांवर्तकमिवानलम् १
वीक्षमाणं धनुः सज्यं निःश्वसन्तं मुहुर्मुहुः
हन्तुकामं पशुं रुद्रं क्रुद्धं दक्षक्रतौ यथा २
अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं स लक्ष्मणः
अब्रवीत्प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ३
पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः

न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ४
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा
एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ५
न तु जानामि कस्यायं भग्नः सांग्रामिको रथः
केन वा कस्य वा हेतोः सायुधः सपरिच्छदः ६
खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः
देशो निवृत्तसंग्रामः सुघोरः पार्थिवात्मज ७
एकस्य तु विमर्दोऽय न द्वयोर्वदतां वर
न हि वृत्तं हि पश्यामि बलस्य महतः पदम् ८
नैकस्य तु कृते लोकान्विनाशयितुमर्हसि
युक्तदगडा हि मृदवः प्रशान्ता वसुधाधिपाः ९
सदा त्वं सर्वभूतानां शरगयः परमा गतिः
को नु दारप्रणाशं ते साधु मन्येत राघव १०
सरितः सागराः शैला देवगन्धर्वदानवाः
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ११
येन राजन्हृता सीता तमन्वेषितुमर्हसि
मद्द्वितीयो धनुष्पाणिः सहायैः परमर्षिभिः १२
समुद्रं च विचेष्यामः पर्वतांश्च वनानि च
गुहाश्च विविधा घोरा नलिनीः पार्वतीश्च ह १३
देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः
यावन्नाधिगमिष्यामस्तव भार्यापहारिणम् १४
न चेत्साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः
कोसलेन्द्र ततः पश्चात्प्राप्तकालं करिष्यसि १५
शीलेन साम्ना विनयेन सीतां
नयेन न प्राप्स्यसि चेन्नरेन्द्र
ततः समुत्सादय हेमपुङ्खै-
र्महेन्द्रवज्रप्रतिमैः शरौघैः १६
इति श्रीरामायणे अरगयकागडे एकषष्टितमः सर्गः ६१

३-६२

तं तथा शोकसंतप्तं विलपन्तमनाथवत्
मोहेन महताविष्टं परिद्यूनमचेतनम् १
ततः सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः
रामं संबोधयामास चरणौ चाभिपीडयन् २
महता तपसा राम महता चापि कर्मणा
राज्ञा दशरथेनासील्लब्धोऽमृतमिवामरैः ३
तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः
राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ४
यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे
प्राकृतश्चाल्पसत्त्वश्च इतरः कः सहिष्यति ५
दुःखितो हि भवाँल्लोकांस्तेजसा यदि धक्ष्यते
आर्ताः प्रजा नरव्याघ्र क्व नु यास्यन्ति निर्वृतिम् ६
लोकस्वभाव एवैष ययातिर्नहुषात्मजः
गतः शक्रेण सालोक्यमनयस्तं समस्पृशत् ७
महर्षियो वसिष्ठस्तु यः पितुर्नः पुरोहितः
अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ८
या चेयं जगतो माता देवी लोकनमस्कृता
अस्याश्च चलनं भूमेर्दृश्यते सत्यसंश्रव ९
यौ चेमौ जगतां नेत्रे यत्र सर्वं प्रतिष्ठितम्
आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ १०
सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ
न दैवस्य प्रमुञ्चन्ति सर्वभूतानि देहिनः ११
शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ
श्रूयेते नरशार्दूल न त्वं व्यथितुमर्हसि १२
नष्टायामपि वैदेह्यां हृतायामपि चानघ
शोचितुं नार्हसे वीर यथान्यः प्राकृतस्तथा १३
त्वद्विधा हि न शोचन्ति सततं सत्यदर्शिनः
सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः १४
तत्त्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय

बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे १५
अदृष्टगुणदोषाणामधृतानां च कर्मणाम्
नान्तरेण क्रियां तेषां फलमिष्टं प्रवर्तते १६
मामेव हि पुरा वीर त्वमेव बहुशोऽन्वशाः
अनुशिष्याद्धि को नु त्वामपि साक्षाद्बृहस्पतिः १७
बुद्धिश्च ते महाप्राज्ञ देवैरपि दुरन्वया
शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् १८
दिव्यं च मानुषं चैवमात्मनश्च पराक्रमम्
इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे १९
किं ते सर्वविनाशेन कृतेन पुरुषर्षभ
तमेव तु रिपुं पापं विज्ञायोद्धर्तुमर्हसि २०
इति श्रीरामायणे अरगयकागडे द्विषष्टितमः सर्गः ६२

३-६३

पूर्वजोऽप्युक्तमात्रस्तु लक्ष्मणेन सुभाषितम्
सारग्राही महासारं प्रतिजग्राह राघवः १
संनिगृह्य महाबाहुः प्रवृद्धं कोपमात्मनः
अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् २
किं करिष्यावहे वत्स क्व वा गच्छाव लक्ष्मण
केनोपायेन पश्येयं सीतामिति विचिन्तय ३
तं तथा परितापार्तं लक्ष्मणो राममब्रवीत्
इदमेव जनस्थानं त्वमन्वेषितुमर्हसि
राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम् ४
सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणि च
गुहाश्च विविधा घोरा नानामृगगणाकुलाः ५
आवासाः किंनराणां च गन्धर्वभवनानि च
तानि युक्तो मया सार्धं त्वमन्वेषितुमर्हसि ६
त्वद्विधा बुद्धिसम्पन्ना महात्मानो नरर्षभ
आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः ७
इत्युक्तस्तद्वनं सर्वं विचचार सलक्ष्मणः

क्रुद्धो रामः शरं घोरं संधाय धनुषि क्षुरम् ८
ततः पर्वतकूटाभं महाभागं द्विजोत्तमम्
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ९
तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत्
अनेन सीता वैदेही भक्षिता नात्र संशयः १०
गृध्ररूपमिदं व्यक्तं रक्षो भ्रमति काननम्
भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम्
एनं वधिष्ये दीप्ताग्रैर्घोरैर्बाणैरजिह्मगैः ११
इत्युक्त्वाभ्यपतद्गृध्रं संधाय धनुषि क्षुरम्
क्रुद्धो रामः समुद्रान्तां चालयन्निव मेदिनीम् १२
तं दीनदीनया वाचा सफेनं रुधिरं वमन्
अभ्यभाषत पक्षी तु रामं दशरथात्मजम् १३
यामोषधिमिवायुष्मन्नन्वेषसि महावने
सा देवी मम च प्राणा रावणेनोभयं हृतम् १४
त्वया विरहिता देवी लक्ष्मणेन च राघव
ह्रियमाणा मया दृष्टा रावणेन बलीयसा १५
सीतामभ्यवपन्नोऽह रावणश्च रणे मया
विध्वंसितरथच्छत्रः पातितो धरणीतले १६
एतदस्य धनुर्भग्नमेतदस्य शरावरम्
अयमस्य रणे राम भग्नः सांग्रामिको रथः १७
परिश्रान्तस्य मे पक्षौ छित्त्वा खड्गेन रावणः
सीतामादाय वैदेहीमुत्पपात विहायसम्
रक्षसा निहतं पूर्वं न मां हन्तुं त्वमर्हसि १८
रामस्तस्य तु विज्ञाय सीतासक्तां प्रियां कथाम्
गृध्रराजं परिष्वज्य रुरोद सहलक्ष्मणः १९
एकमेकायने दुर्गे निःश्वसन्तं कथंचन
समीक्ष्य दुःखितो रामः सौमित्रिमिदमब्रवीत् २०
राज्याद्भ्रंशो वने वासः सीता नष्टा हतो द्विजः
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् २१
संपूर्णमपि चेदद्य प्रतरेयं महोदधिम्

सोऽपि नूनं ममालक्ष्म्या विशुष्येत्सरितां पतिः २२
नास्त्यभाग्यतरो लोके मत्तोऽस्मिन्सचराचरे
येनेयं महती प्राप्ता मया व्यसनवागुरा २३
अयं पितृवयस्यो मे गृध्रराजो जरान्वितः
शेते विनिहतो भूमौ मम भाग्यविपर्ययात् २४
इत्येवमुक्त्वा बहुशो राघवः सहलक्ष्मणः
जटायुषं च पस्पर्श पितृस्नेहं निदर्शयन् २५
निकृत्तपक्षं रुधिरावसिक्तं
तं गृध्रराजं परिरभ्य रामः
क्व मैथिली प्राणसमा ममेति
विमुच्य वाचं निपपात भूमौ २६
इति श्रीरामायणे अरण्यकाण्डे त्रिषष्टितमः सर्गः ६३

३-६४

रामः प्रेक्ष्य तु तं गृध्रं भुवि रौद्रेण पातितम्
सौमित्रिं मित्रसंपन्नमिदं वचनमब्रवीत् १
ममायं नूनमर्थेषु यतमानो विहंगमः
राक्षसेन हतः संख्ये प्राणांस्त्यजति दुस्त्यजान् २
अयमस्य शरीरेऽस्मिन्प्राणो लक्ष्मण विद्यते
तथा स्वरविहीनोऽय विक्लवं समुदीक्षते ३
जटायो यदि शक्नोपि वाक्यं व्याहरितुं पुनः
सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ४
किंनिमित्तोऽहरत्सीतां रावणस्तस्य किं मया
अपराद्धं तु यं दृष्ट्वा रावणेन हृता प्रिया ५
कथं तच्चन्द्रसंकाशं मुखमासीन्मनोहरम्
सीतया कानि चोक्तानि तस्मिन्काले द्विजोत्तम ६
कथंवीर्यः कथंरूपः किंकर्मा स च राक्षसः
क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ७
तमुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम्
वाचातिसन्नया रामं जटायुरिदमब्रवीत् ८

सा हृता राक्षसेन्द्रेण रावणेन विहायसा
मायामास्थाय विपुलां वातदुर्दिनसंकुलाम् ९
परिश्रान्तस्य मे तात पक्षौ छित्त्वा निशाचरः
सीतामादाय वैदेहीं प्रयातो दक्षिणामुखः १०
उपरुद्ध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव
पश्यामि वृक्षान्सौवर्णानुशीरकृतमूर्धजान् ११
येन याति मुहूर्तेन सीतामादाय रावणः
विप्रनष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते १२
विन्दो नाम मुहूर्तोऽसौ स च काकुत्स्थ नाबुधत्
झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति १३
न च त्वया व्यथा कार्या जनकस्य सुतां प्रति
वैदेह्या रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे १४
असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः
आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् १५
पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च
इत्युक्त्वा दुर्लभान्प्राणान्मुमोच पतगेश्वरः १६
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः
त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम् १७
स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तदा
विक्षिप्य च शरीरं स्वं पपात धरणीतले १८
तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम्
रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् १९
बहूनि रक्षसां वासे वर्षाणि वसता सुखम्
अनेन दण्डकारण्ये विचीर्णमिह पक्षिणा २०
अनेकवार्षिको यस्तु चिरकालसमुत्थितः
सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः २१
पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्च मे
सीतामभ्यवपन्नो वै रावणेन बलीयसा २२
गृध्रराज्यं परित्यज्य पितृपैतामहं महत्
मम हेतोरयं प्राणान्मुमोच पतगेश्वरः २३

सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः
शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि २४
सीताहरणजं दुःखं न मे सौम्य तथागतम्
यथा विनाशो गृध्रस्य मत्कृते च परंतप २५
राजा दशरथः श्रीमान्यथा मम महायशाः
पूजनीयश्च मान्यश्च तथायं पतगेश्वरः २६
सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम्
गृध्रराजं दिधक्षामि मत्कृते निधनं गतम् २७
नाथं पतगलोकस्य चितामारोपयाम्यहम्
इमं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा २८
या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः
अपरावर्तिनां या च या च भूमिप्रदायिनाम् २९
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान्
गृध्रराज महासत्त्व संस्कृतश्च मया व्रज ३०
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम्
ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ३१
रामोऽथ सहसौमित्रिर्वनं यात्वा स वीर्यवान्
स्थूलान्हत्वा महारोहीननु तस्तार तं द्विजम् ३२
रोहिमांसानि चोद्धृत्य पेशीकृत्वा महायशाः
शकुनाय ददौ रामो रम्ये हरितशाद्वले ३३
यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः
तत्स्वर्गगमनं तस्य क्षिप्रं रामो जजाप ह ३४
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ
उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ३५
स गृध्रराजः कृतवान्यशस्करं
सुदुष्करं कर्म रणे निपातितः
महर्षिकल्पेन च संस्कृतस्तदा
जगाम पुण्यां गतिमात्मनः शुभाम् ३६

इति श्रीरामायणे अरण्यकाण्डे चतुःषष्टितमः सर्गः ६४

३-६५
कृत्वैवमुदकं तस्मै प्रस्थितौ राघवौ तदा
अवेक्षन्तौ वने सीतां पश्चिमां जग्मतुर्दिशम् १
तां दिशं दक्षिणां गत्वा शरचापासिधारिणौ
अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिपेदतुः २
गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम्
आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ३
व्यतिक्रम्य तु वेगेन गृहीत्वा दक्षिणां दिशम्
सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ४
ततः परं जनस्थानात्त्रिक्रोशं गम्य राघवौ
क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ५
नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः
नानावर्णैः शुभैः पुष्पैर्मृगपक्षिगणैर्युतम् ६
दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः
तत्र तत्रावतिष्ठन्तौ सीताहरणकर्शितौ ७
लक्ष्मणस्तु महातेजाः सत्त्ववाञ्शीलवाञ्शुचिः
अब्रवीत्प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ८
स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ९
तस्मात्सज्जीभवार्य त्वं कुरुष्व वचनं हितम्
ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् १०
एष वञ्चुलको नाम पक्षी परमदारुणः
आवयोर्विजयं युद्धे शंसन्निव विनर्दति ११
तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा
संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् १२
संवेष्टितमिवात्यर्थं गहनं मातरिश्वना
वनस्य तस्य शब्दोऽभूद्दिवमापूरयन्निव १३
तं शब्दं काङ्क्षमाणस्तु रामः कक्षे सहानुजः
ददर्श सुमहाकायं राक्षसं विपुलोरसम् १४
आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम्

विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् १५
रोमभिर्निचितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम्
नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् १६
महापक्ष्मेण पिङ्गेन विपुलेनायतेन च
एकेनोरसि घोरेण नयनेनाशुदर्शिना १७
महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम्
भक्षयन्तं महाघोरानृक्षसिंहमृगद्विपान् १८
घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ
कराभ्यां विविधान्गृह्य ऋक्षान्पक्षिगणान्मृगान् १९
आकर्षन्तं विकर्षन्तमनेकान्मृगयूथपान्
स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः २०
अथ तौ समतिक्रम्य क्रोशमात्रे ददर्शतुः
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् २१
स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ
जग्राह सहितावेव राघवौ पीडयन्बलात् २२
खड्गिनौ दृढधन्वानौ तिग्मतेजौ महाभुजौ
भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ २३
तावुवाच महाबाहुः कबन्धो दानवोत्तमः
कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ २४
घोरं देशमिमं प्राप्तौ मम भक्षावुपस्थितौ
वदतं कार्यमिह वां किमर्थं चागतौ युवाम् २५
इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः
सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ
ममास्यमनुसंप्राप्तौ दुर्लभं जीवितं पुनः २६
तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता २७
कृच्छ्रात्कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम
व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् २८
कालस्य सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण
त्वां च मां नरव्याघ्र व्यसनैः पश्य मोहितौ

नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण २९
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ३०
इति ब्रुवाणो दृढसत्यविक्रमो
महायशा दाशरथिः प्रतापवान्
अवेक्ष्य सौमित्रिमुदग्रविक्रमं
स्थिरां तदा स्वां मतिमात्मनाकरोत् ३१
इति श्रीरामायणे अरण्यकाण्डे पञ्चषष्टितमः सर्गः ६५

३-६६
तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् १
तिष्ठतः किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ
आहारार्थं तु संदिष्टौ दैवेन गतचेतसौ २
तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा
उवाचार्तिसमापन्नो विक्रमे कृतनिश्चयः ३
त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः
तस्मादसिभ्यामस्याशु बाहू छिन्दावहे गुरू ४
ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ
अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशयोः ५
दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः
चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ६
स पपात महाबाहुश्छिन्नबाहुर्महास्वनः
खं च गां च दिशश्चैव नादयञ्जलदो यथा ७
स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः
दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ८
इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः
शशंस तस्य काकुत्स्थं कबन्धस्य महाबलः ९
अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः
अस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् १०

अस्य देवप्रभावस्य वसतो विजने वने
रक्षसापहृता भार्या यामिच्छन्ताविहागतौ ११
त्वं तु को वा किमर्थं वा कबन्धसदृशो वने
आस्येनोरसि दीप्तेन भग्नजङ्घो विचेष्टसे १२
एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तरं वचः
उवाच परमप्रीतस्तदिन्द्रवचनं स्मरन् १३
स्वागतं वां नरव्याघ्रौ दिष्ट्या पश्यामि चाप्यहम्
दिष्ट्या चेमौ निकृत्तौ मे युवाभ्यां बाहुबन्धनौ १४
विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद्यथा
तन्मे शृणु नरव्याघ्र तत्त्वतः शंसतस्तव १५
इति श्रीरामायणे अरगयकागडे षट्षष्टितमः सर्गः ६६

३-६७

पुरा राम महाबाहो महाबलपराक्रम
रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम्
यथा सोमस्य शक्रस्य सूर्यस्य च यथा वपुः १
सोऽह रूपमिदं कृत्वा लोकवित्रासनं महत्
ऋषीन्वनगतान्राम त्रासयामि ततस्ततः २
ततः स्थूलशिरा नाम महर्षिः कोपितो मया
संचिन्वन्विविधं वन्यं रूपेणानेन धर्षितः ३
तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना
एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ४
स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति
अभिशापकृतस्येति तेनेदं भाषितं वचः ५
यदा छित्त्वा भुजौ रामस्त्वां दहेद्विजने वने
तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् ६
श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण
इन्द्रकोपादिदं रूपं प्राप्तमेवं रणाजिरे ७
अहं हि तपसोग्रेण पितामहमतोषयम्
दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत् ८

दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति
इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ९
तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा
सक्थिनी च शिरश्चैव शरीरे संप्रवेशितम् १०
स मया याच्यमानः सन्नानयद्यमसादनम्
पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् ११
अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः
वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम् १२
एवमुक्तस्तु मे शक्रो बाहू योजनमायतौ
प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् १३
सोऽह भुजाभ्यां दीर्घाभ्यां समाकृष्य वनेचरान्
सिंहद्विपमृगव्याघ्रान्भक्षयामि समन्ततः १४
स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः
छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि १५
स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव
शक्यो हन्तुं यथातत्त्वमेवमुक्तं महर्षिणा १६
अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ
मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना १७
एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः
इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः १८
रावणेन हृता सीता मम भार्या यशस्विनी
निष्क्रान्तस्य जनस्थानात्सह भ्रात्रा यथासुखम् १९
नाममात्रं तु जानामि न रूपं तस्य रक्षसः
निवासं वा प्रभावं वा वयं तस्य न विद्महे २०
शोकार्तानामनाथानामेवं विपरिधावताम्
कारुण्यं सदृशं कर्तुमुपकारे च वर्तताम् २१
काष्ठान्यानीय शुष्काणि काले भग्नानि कुञ्जरैः
धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते २२
स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता
कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः २३

एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम्
प्रोवाच कुशलो वक्तुं वक्तारमपि राघवम् २४
दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम्
यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः २५
अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो
राक्षसं तं महावीर्यं सीता येन हृता तव २६
विज्ञानं हि महद्भ्रष्टं शापदोषेण राघव
स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् २७
किं तु यावन्न यात्यस्तं सविता श्रान्तवाहनः
तावन्मामवटे क्षिप्त्वा दह राम यथाविधि २८
दग्धस्त्वयाहमवटे न्यायेन रघुनन्दन
वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् २९
तेन सख्यं च कर्तव्यं न्याय्यवृत्तेन राघव
कल्पयिष्यति ते प्रीतः साहाय्यं लघुविक्रमः ३०
न हि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव
सर्वान्परिसृतो लोकान्पुरा वै कारणान्तरे ३१
इति श्रीरामायणे अरगयकागडे सप्तषष्टितमः सर्गः ६७

३-६८

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ
गिरिप्रदरमासाद्य पावकं विससर्जतुः १
लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः
चितामादीपयामास सा प्रजज्वाल सर्वतः २
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत्
मेदसा पच्यमानस्य मन्दं दहति पावकः ३
स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः
अरजे वाससी बिभ्रन्मालां दिव्यां महाबलः ४
ततश्चिताया वेगेन भास्वरो विरजाम्बरः
उत्पपाताशु संहृष्टः सर्वप्रत्यङ्गभूषणः ५
विमाने भास्वरे तिष्ठन्हंसयुक्ते यशस्करे

प्रभया च महातेजा दिशो दश विराजयन् ६
सोऽन्तरिक्षगतो रामं कबन्धो वाक्यमब्रवीत्
शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि ७
राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते
परिमृष्टो दशान्तेन दशाभागेन सेव्यते ८
दशाभागगतो हीनस्त्वं राम सहलक्ष्मणः
यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ९
तदवश्यं त्वया कार्यः स सुहृत्सुहृदां वर
अकृत्वा न हि ते सिद्धिमहं पश्यामि चिन्तयन् १०
श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ११
ऋष्यमूके गिरिवरे पम्पापर्यन्तशोभिते
निवसत्यात्मवान्वीरश्चतुर्भिः सह वानरैः १२
वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव
अद्रोहाय समागम्य दीप्यमाने विभावसौ १३
न च ते सोऽवमन्तव्यः सुग्रीवो वानराधिपः
कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् १४
शक्तौ ह्यद्य युवां कर्तुं कार्यं तस्य चिकीर्षितम्
कृतार्थो वाकृतार्थो वा कृत्यं तव करिष्यति १५
स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः
भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः १६
संनिधायायुधं क्षिप्रमृष्यमूकालयं कपिम्
कुरु राघव सत्येन वयस्यं वनचारिणम् १७
स हि स्थानानि सर्वाणि कार्त्स्न्येन कपिकुञ्जरः
नरमांसाशिनां लोके नैपुण्यादधिगच्छति १८
न तस्याविदितं लोके किंचिदस्ति हि राघव
यावत्सूर्यः प्रतपति सहस्रांशुररिंदम १९
स नदीर्विपुलाञ्शैलान्गिरिदुर्गाणि कन्दरान्
अन्विष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति २०
वानरांश्च महाकायान्प्रेषयिष्यति राघव

दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् २१
न मेरुशृङ्गाग्रगतामनिन्दितां
प्रविश्य पातालतलेऽपि वाश्रिताम्
प्लवंगमानां प्रवरस्तव प्रियां
निहत्य रक्षांसि पुनः प्रदास्यति २२
इति श्रीरामायणे अरण्यकाण्डे अष्टषष्टितमः सर्गः ६८

३-६९
निदर्शयित्वा रामाय सीतायाः प्रतिपादने
वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् १
एष राम शिवः पन्था यत्रैते पुष्पिता द्रुमाः
प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः २
जम्बूप्रियालपनसाः प्लक्षन्यग्रोधतिन्दुकाः
अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ३
तानारुह्याथवा भूमौ पातयित्वा च तान्बलात्
फलान्यमृतकल्पानि भक्षयन्तौ गमिष्यथः ४
चङ्क्रमन्तौ वरान्देशाञ्शैलाच्छैलं वनाद्वनम्
ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथः ५
अशर्करामविभ्रंशां समतीर्थामशैवलाम्
राम संजातवालूकां कमलोत्पलशोभिताम् ६
तत्रः हंसाः प्लवाः क्रौञ्चाः कुरराश्चैव राघव
वल्गुस्वरा निकूजन्ति पम्पासलिलगोचराः ७
नोद्विजन्ते नरान्दृष्ट्वा वधस्याकोविदाः शुभाः
घृतपिण्डोपमान्स्थूलांस्तान्द्विजान्भक्षयिष्यथः ८
रोहितान्वक्रतुण्डांश्च नलमीनांश्च राघव
पम्पायामिषुभिर्मत्स्यांस्तत्र राम वरान्हतान् ९
निस्त्वक्पक्षानयस्तप्तानकृशानेककण्टकान्
तव भक्त्या समायुक्तो लक्ष्मणः संप्रदास्यति १०
भृशं ते खादतो मत्स्यान्पम्पायाः पुष्पसंचये
पद्मगन्धि शिवं वारि सुखशीतमनामयम् ११

उद्धृत्य स तदाक्लिष्टं रूप्यस्फटिकसंनिभम्
अथ पुष्करपर्णेन लक्ष्मणः पाययिष्यति १२
स्थूलान्गिरिगुहाशय्यान्वराहान्वनचारिणः
अपां लोभादुपावृत्तान्वृषभानिव नर्दतः
रूपान्वितांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम १३
सायाह्ने विचरन्राम विटपी माल्यधारिणः
शीतोदकं च पम्पायां दृष्ट्वा शोकं विहास्यसि १४
सुमनोभिश्चितांस्तत्र तिलकान्नक्तमालकान्
उत्पलानि च फुल्लानि पङ्कजानि च राघव १५
न तानि कश्चिन्माल्यानि तत्रारोपयिता नरः
मतङ्गशिष्यास्तत्रासन्नृषयः सुसमाहिता १६
तेषां भाराभितप्तानां वन्यमाहरतां गुरोः
ये प्रपेतुर्महीं तूर्णं शरीरात्स्वेदबिन्दवः १७
तानि माल्यानि जातानि मुनीनां तपसा तदा
स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव १८
तेषामद्यापि तत्रैव दृश्यते परिचारिणी
श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी १९
त्वां तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम्
दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति २०
ततस्तद्राम पम्पायास्तीरमाश्रित्य पश्चिमम्
आश्रमस्थानमतुलं गुह्यं काकुत्स्थ पश्यसि २१
न तत्राक्रमितुं नागाः शक्नुवन्ति तमाश्रमम्
ऋषेस्तस्य मतङ्गस्य विधानात्तच्च काननम् २२
तस्मिन्नन्दनसंकाशे देवारण्योपमे वने
नानाविहगसंकीर्णे रंस्यसे राम निर्वृतः २३
ऋष्यमूकस्तु पम्पायाः पुरस्तात्पुष्पितद्रुमः
सुदुःखारोहणो नाम शिशुनागाभिरक्षितः
उदारो ब्रह्मणा चैव पूर्वकाले विनिर्मितः २४
शयानः पुरुषो राम तस्य शैलस्य मूर्धनि
यत्स्वप्ने लभते वित्तं तत्प्रबुद्धोऽधिगच्छति २५

न त्वेनं विषमाचारः पापकर्माधिरोहति
तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसाः २६
ततोऽपि शिशुनागानामाक्रन्दः श्रूयते महान्
क्रीडतां राम पम्पायां मतङ्गारण्यवासिनाम् २७
सिक्ता रुधिरधाराभिः संहत्य परमद्विपाः
प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विनः २८
ते तत्र पीत्वा पानीयं विमलं शीतमव्ययम्
निवृत्ताः संविगाहन्ते वनानि वनगोचराः २९
राम तस्य तु शैलस्य महती शोभते गुहा
शिलापिधाना काकुत्स्थ दुःखं चास्याः प्रवेशनम् ३०
तस्या गुहायाः प्राग्द्वारे महाञ्शीतोदको ह्रदः
बहुमूलफलो रम्यो नानानगसमावृतः ३१
तस्यां वसति सुग्रीवश्चतुर्भिः सह वानरैः
कदाचिच्छिखरे तस्य पर्वतस्यावतिष्ठते ३२
कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ
स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् ३३
तं तु खस्थं महाभागं कबन्धं रामलक्ष्मणौ
प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिकात् ३४
गम्यतां कार्यसिध्द्यर्थमिति तावब्रवीच्च सः
सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ३५
स तत्कबन्धः प्रतिपद्य रूपं
वृतः श्रिया भास्करतुल्यदेहः
निदर्शयन्राममवेक्ष्य खस्थः
सख्यं कुरुष्वेति तदाभ्युवाच ३६
इति श्रीरामायणे अरण्यकाण्डे एकोनसप्ततितमः सर्गः ६९

३-७०

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने
आतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ १
तौ शैलेष्वाचितानेकान्क्षौद्रकल्पफलद्रुमान्

वीक्षन्तौ जग्मतुर्द्रष्टुं सुग्रीवं रामलक्ष्मणौ २
कृत्वा च शैलपृष्ठे तु तौ वासं रघुनन्दनौ
पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ३
तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम्
अपश्यतां ततस्तत्र शबर्या रम्यमाश्रमम् ४
तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम्
सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ५
तौ तु दृष्ट्वा तदा सिद्धा समुत्थाय कृताञ्जलि
पादौ जग्राह रामस्य लक्ष्मणस्य च धीमतः ६
तामुवाच ततो रामः श्रमणीं संशितव्रताम्
कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्धते तपः ७
कच्चित्ते नियतः कोप आहारश्च तपोधने
कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम्
कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि ८
रामेण तापसी पृष्टा सा सिद्धा सिद्धसंमता
शशंस शबरी वृद्धा रामाय प्रत्युपस्थिता ९
चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः
इतस्ते दिवमारूढा यानहं पर्यचारिषम् १०
तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः
आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ११
स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः
तं च दृष्ट्वा वराँल्लोकानक्षयांस्त्वं गमिष्यसि १२
मया तु विविधं वन्यं संचितं पुरुषर्षभ
तवार्थे पुरुषव्याघ्र पम्पायास्तीरसंभवम् १३
एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम्
राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् १४
दनोः सकाशात्तत्त्वेन प्रभावं ते महात्मनः
श्रुतं प्रत्यक्षमिच्छामि संद्रष्टुं यदि मन्यसे १५
एतत्तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतम्
शबरी दर्शयामास तावुभौ तद्वनं महत् १६

पश्य मेघघनप्रख्यं मृगपक्षिसमाकुलम्
मतङ्गवनमित्येव विश्रुतं रघुनन्दन १७
इह ते भावितात्मानो गुरवो मे महाद्युते
जुहवाञ्चक्रिरे तीर्थं मन्त्रवन्मन्त्रपूजितम् १८
इयं प्रत्यक्स्थली वेदी यत्र ते मे सुसत्कृताः
पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः १९
तेषां तपःप्रभावेन पश्याद्यापि रघूत्तम
द्योतयन्ति दिशः सर्वाः श्रिया वेद्योऽतुलप्रभाः २०
अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः
चिन्तितेऽभ्यागतान्पश्य समेतान्सप्त सागरान् २१
कृताभिषेकैस्तैर्न्यस्ता वल्कलाः पादपेष्विह
अद्यापि न विशुष्यन्ति प्रदेशे रघुनन्दन २२
कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया
तदिच्छाम्यभ्यनुज्ञाता त्यक्तुमेतत्कलेवरम् २३
तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम्
मुनीनामाश्रमो येषामहं च परिचारिणी २४
धर्मिष्ठं तु वचः श्रुत्वा राघवः सहलक्ष्मणः
अनुजानामि गच्छेति प्रहृष्टवदनोऽब्रवीत् २५
अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने
ज्वलत्पावकसंकाशा स्वर्गमेव जगाम सा २६
यत्र ते सुकृतात्मानो विहरन्ति महर्षयः
तत्पुण्यं शबरी स्थानं जगामात्मसमाधिना २७
इति श्रीरामायणे अरण्यकाण्डे सप्ततितमः सर्गः ७०

३-७१

दिवं तु तस्यां यातायां शबर्यां स्वेन कर्मणा
लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः १
चिन्तयित्वा तु धर्मात्मा प्रभावं तं महात्मनाम्
हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् २
दृष्टोऽयमाश्रमः सौम्य बह्वाश्चर्यः कृतात्मनाम्

विश्वस्तमृगशार्दूलो नानाविहगसेवितः ३
सप्तानां च समुद्राणामेषु तीर्थेषु लक्ष्मण
उपस्पृष्टं च विधिवत्पितरश्चापि तर्पिताः४
प्रनष्टमशुभं यत्तत्कल्याणं समुपस्थितम्
तेन त्वेतत्प्रहृष्टं मे मनो लक्ष्मण संप्रति ५
हृदये हि नरव्याघ्र शुभमाविर्भविष्यति
तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् ६
ऋृश्यमूको गिरिर्यत्र नातिदूरे प्रकाशते
यस्मिन्वसति धर्मात्मा सुग्रीवोंऽशुमतः सुतः
नित्यं वालिभयत्त्रस्तश्चतुर्भिः सह वानरैः ७
अभित्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम्
तदधीनं हि मे सौम्य सीतायाः परिमार्गणम् ८
इति ब्रुवाणं तं रामं सौमित्रिरिदमब्रवीत्
गच्छावस्त्वरितं तत्र ममापि त्वरते मनः ९
आश्रमात्तु ततस्तस्मान्निष्क्रम्य स विशांपतिः
आजगाम ततः पम्पां लक्ष्मणेन सहाभिभूः १०
समीक्षमाणः पुष्पाढ्यं सर्वतो विपुलद्रुमम्
कोयष्टिभिश्चार्जुनकैः शतपत्रैश्च कीचकैः
एतैश्चान्यैश्च विविधैर्नादितं तद्वनं महत् ११
स रामो विविधान्वृक्षान्सरांसि विविधानि च
पश्यन्कामाभिसंतप्तो जगाम परमं ह्रदम् १२
स तामासाद्य वै रामो दूरादुदकवाहिनीम्
मतङ्गसरसं नाम ह्रदं समवगाहत १३श्८
स तु शोकसमाविष्टो रामो दशरथात्मजः
विवेश नलिनीं पम्पां पङ्कजैश्च समावृताम् १४
तिलकाशोकपुंनागबकुलोद्दालकाशिनीम्
रम्योपवनसंबाधां पद्मसंपीडितोदकाम् १५
स्फटिकोपमतोयाढ्यां श्लक्ष्णवालुकसंतताम्
मत्स्यकच्छपसंबाधां तीरस्थद्रुमशोभिताम् १६
सखीभिरिव युक्ताभिर्लताभिरनुवेष्टिताम्

किंनरोरगगन्धर्वयक्षराक्षससेविताम्
नानाद्रुमलताकीर्णां शीतवारिनिधिं शुभाम् १७
पद्मैः सौगन्धिकैस्ताम्रां शुक्लां कुमुदमण्डलैः
नीलां कुवलयोद्धातैर्बहुवर्णां कुथामिव १८
अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम्
पुष्पिताम्रवणोपेतां बर्हिणोद्धुष्टनादिताम् १९
स तां दृष्ट्वा ततः पम्पां रामः सौमित्रिणा सह
विललाप च तेजस्वी कामाद्दशरथात्मजः २०
तिलकैर्बीजपूरैश्च वटैः शुक्लद्रुमैस्तथा
पुष्पितैः करवीरैश्च पुंनागैश्च सुपुष्पितैः २१
मालतीकुन्दगुल्मैश्च भण्डीरैर्निचुलैस्तथा
अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः
अन्यैश्च विविधैर्वृक्षैः प्रमदेवोपशोभिताम् २२
अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः
ऋश्यमूक इति ख्यातश्चित्रपुष्पितकाननः २३
हरिर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः
अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः २४
सुग्रीवमभिगच्छ त्वं वानरेन्द्रं नरर्षभ
इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम् २५
ततो महद्वर्त्म च दूरसंक्रमं
क्रमेण गत्वा प्रविलोकयन्वनम्
ददर्श पम्पां शुभदर्शकानना
मनेकनानाविधपक्षिसंकुलाम् २६

इति श्रीरामायणे अरण्यकाण्डे एकसप्ततितमः सर्गः ७१

समाप्तमरण्यकाण्डम्

Aranya Kānda: Typed by Rajesh Yadev, B.A., and proofread by Raseshwar Jha, Vyākaranāchārya (Ph.D.).

४-१

स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम्
रामः सौमित्रिसहितो विललापाकुलेन्द्रियः १
तस्य दृष्ट्वैव तां हर्षादिन्द्रियाणि चकम्पिरे
स कामवशमापन्नः सौमित्रिमिदमब्रवीत् २
सौमित्रे पश्य पम्पायाः काननं शुभदर्शनम्
यत्र राजन्ति शैलाभा द्रुमाः सशिखरा इव ३
मां तु शोकाभिसंतप्तमाधयः पीडयन्ति वै
भरतस्य च दुःखेन वैदेह्या हरणेन च ४
अधिकं प्रविभात्येतन्नीलपीतं तु शाद्वलम्
द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितम् ५
सुखानिलोऽय सौमित्रे कालः प्रचुरमन्मथः
गन्धवान्सुरभिर्मासो जातपुष्पफलद्रुमः ६
पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम्
सृजतां पुष्पवर्षाणि वर्षं तोयमुचामिव ७
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ८
मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः
षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ९
गिरिप्रस्थेषु रम्येषु पुष्पवद्भिर्मनोरमैः
संसक्तशिखराः शैला विराजन्ति महाद्रुमैः १०
पुष्पिताग्रांश्च पश्येमान्कर्णिकारान्समन्ततः
हाटकप्रतिसंछन्नान्नरान्पीताम्बरानिव ११
अयं वसन्तः सौमित्रे नानाविहगनादितः
सीतया विप्रहीणस्य शोकसंदीपनो मम १२
मां हि शोकसमाक्रान्तं संतापयति मन्मथः
हृष्टः प्रवदमानश्च समाह्वयति कोकिलः १३
एष दात्यूहको हृष्टो रम्ये मां वननिर्झरे
प्रणदन्मन्मथाविष्टं शोचयिष्यति लक्ष्मण १४
विमिश्रा विहगाः पुंभिरात्मव्यूहाभिनन्दिताः

भृङ्गराजप्रमुदिताः सौमित्रे मधुरस्वराः १५
मां हि सा मृगशावाक्षी चिन्ताशोकबलात्कृतम्
संतापयति सौमित्रे क्रूरश्चैत्रवनानिलः १६
शिखिनीभिः परिवृता मयूरा गिरिसानुषु
मन्मथाभिपरीतस्य मम मन्मथवर्धनाः १७
पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति
शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु १८
मयूरस्य वने नूनं रक्षसा न हृता प्रिया
मम त्वयं विना वासः पुष्पमासे सुदुःसहः १९
पश्य लक्ष्मण पुष्पाणि निष्फलानि भवन्ति मे
पुष्पभारसमृद्धानां वनानां शिशिरात्यये २०
वदन्ति रावं मुदिताः शकुनाः संघशः कलम्
आह्वयन्त इवान्योन्यं कामोन्मादकरा मम २१
नूनं परवशा सीता सापि शोचत्यहं यथा
श्यामा पद्मपलाशाक्षी मृदुभाषा च मे प्रिया २२
एष पुष्पवहो वायुः सुखस्पर्शो हिमावहः
तां विचिन्तयतः कान्तां पावकप्रतिमो मम २३
तां विनाथ विहंगोऽसौ पक्षी प्रणदितस्तदा
वायसः पादपगतः प्रहृष्टमभिनर्दति २४
एष वै तत्र वैदेह्या विहगः प्रतिहारकः
पक्षी मां तु विशालाक्ष्याः समीपमुपनेष्यति २५
पश्य लक्ष्मण संनादं वने मदविवर्धनम्
पुष्पिताग्रेषु वृक्षेषु द्विजानामुपकूजताम् २६
सौमित्रे पश्य पम्पायाश्चित्रासु वनराजिषु
नलिनानि प्रकाशन्ते जले तरुणसूर्यवत् २७
एषा प्रसन्नसलिला पद्मनीलोत्पलायुता
हंसकारण्डवाकीर्णा पम्पा सौगन्धिकायुता २८
चक्रवाकयुता नित्यं चित्रप्रस्थवनान्तरा
मातंगमृगयूथैश्च शोभते सलिलार्थिभिः २९
पद्मकोशपलाशानि द्रष्टुं दृष्टिर्हि मन्यते

सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण ३०
पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतः
निःश्वास इव सीताया वाति वायुर्मनोहरः ३१
सौमित्रे पश्य पम्पाया दक्षिणे गिरिसानुनि
पुष्पितां कर्णिकारस्य यष्टिं परमशोभनाम् ३२
अधिकं शैलराजोऽय धातुभिस्तु विभूषितः
विचित्रं सृजते रेणुं वायुवेगविघट्टितम् ३३
गिरिप्रस्थास्तु सौमित्रे सर्वतः संप्रपुष्पितैः
निष्पत्रैः सर्वतो रम्यैः प्रदीप्ता इव किंशुकैः ३४
पम्पातीररुहाश्चेमे संसक्ता मधुगन्धिनः
मालतीमल्लिकाषण्डाः करवीराश्च पुष्पिताः ३५
केतक्यः सिन्दुवाराश्च वासन्त्यश्च सुपुष्पिताः
माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च सर्वशः ३६
चिरिबिल्वा मधूकाश्च वञ्जुला बकुलास्तथा
चम्पकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः ३७
नीपाश्च वरणाश्चैव खर्जूराश्च सुपुष्पिताः
अङ्कोलाश्च कुरण्टाश्च चूर्णकाः पारिभद्रकाः ३८
चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः
मुचुकुन्दार्जुनाश्चैव दृश्यन्ते गिरिसानुषु ३९
केतकोद्दालकाश्चैव शिरीषाः शिंशपा धवाः
शाल्मल्यः किंशुकाश्चैव रक्ताः कुरबकास्तथा
तिनिशा नक्तमालाश्च चन्दनाः स्यन्दनास्तथा ४०
विविधा विविधैः पुष्पैस्तैरेव नगसानुषु
विकीर्णैः पीतरक्ताभाः सौमित्रे प्रस्तराः कृताः ४१
हिमान्ते पश्य सौमित्रे वृक्षाणां पुष्पसंभवम्
पुष्पमासे हि तरवः संघर्षादिव पुष्पिताः ४२
पश्य शीतजलां चेमां सौमित्रे पुष्करायुताम्
चक्रवाकानुचरितां कारण्डवनिषेविताम्
प्लवैः क्रौञ्चैश्च संपूर्णां वराहमृगसेविताम् ४३
अधिकं शोभते पम्पा विकूजद्भिर्विहंगमैः ४४

दीपयन्तीव मे कामं विविधा मुदिता द्विजाः
श्यामां चन्द्रमुखीं स्मृत्वा प्रियां पद्मनिभेक्षणाम् ४५
पश्य सानुषु चित्रेषु मृगीभिः सहितान्मृगान्
मां पुनर्मृगशावाक्ष्या वैदेह्या विरहीकृतम् ४६
एवं स विलपंस्तत्र शोकोपहतचेतनः
अवेक्षत शिवां पम्पां रम्यवारिवहां शुभाम् ४७
निरीक्षमाणः सहसा महात्मा
सर्वं वनं निर्झरकन्दरं च
उद्विग्नचेताः सह लक्ष्मणेन
विचार्य दुःखोपहतः प्रतस्थे ४८
तावृश्यमूकं सहितौ प्रयातौ
सुग्रीवशाखामृगसेवितं तम्
त्रस्तास्तु दृष्ट्वा हरयो बभूवु
र्महौजसौ राघवलक्ष्मणौ तौ ४९
इति श्रीरामायणे किष्किन्धाकाण्डे प्रथमः सर्गः १

४-२

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ
वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् १
उद्विग्नहृदयः सर्वा दिशः समवलोकयन्
न व्यतिष्ठत कस्मिंश्चिद्देशे वानरपुंगवः २
नैव चक्रे मनः स्थाने वीक्षमाणो महाबलौ
कपेः परमभीतस्य चित्तं व्यवससाद ह ३
चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम्
सुग्रीवः परमोद्विग्नः सर्वैरनुचरैः सह ४
ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः
शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ५
एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम्
छद्मना चीरवसनौ प्रचरन्ताविहागतौ ६
ततः सुग्रीवसचिवा दृष्ट्वा परमधन्विनौ

जग्मुर्गिरितटात्तस्मादन्यच्छिखरमुत्तमम् ७
ते क्षिप्रमभिगम्याथ यूथपा यूथपर्षभम्
हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ८
एकमेकायनगताः प्लवमाना गिरेर्गिरिम्
प्रकम्पयन्तो वेगेन गिरीणां शिखराणि च ९
ततः शाखामृगाः सर्वे प्लवमाना महाबलाः
बभञ्जुश्च नगांस्तत्र पुष्पितान्दुर्गसंश्रितान् १०
आप्लवन्तो हरिवराः सर्वतस्तं महागिरिम्
मृगमार्जारशार्दूलांस्त्रासयन्तो ययुस्तदा ११
ततः सुग्रीवसचिवाः पर्वतेन्द्रं समाश्रिताः
संगम्य कपिमुख्येन सर्वे प्राञ्जलयः स्थिताः १२
ततस्तं भयसंत्रस्तं वालिकिल्बिषशङ्कितम्
उवाच हनुमान्वाक्यं सुग्रीवं वाक्यकोविदः १३
यस्मादुद्विग्नचेतास्त्वं प्रद्रुतो हरिपुंगव
तं क्रूरदर्शनं क्रूरं नेह पश्यामि वालिनम् १४
यस्मात्तव भयं सौम्य पूर्वजात्पापकर्मणः
स नेह वाली दुष्टात्मा न ते पश्याम्यहं भयम् १५
अहो शाखामृगत्वं ते व्यक्तमेव प्लवंगम
लघुचित्ततयात्मानं न स्थापयसि यो मतौ १६
बुद्धिविज्ञानसम्पन्न इङ्गितैः सर्वमाचर
न ह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि १७
सुग्रीवस्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः
ततः शुभतरं वाक्यं हनूमन्तमुवाच ह १८
दीर्घबाहू विशालाक्षौ शरचापासिधारिणौ
कस्य न स्याद्भयं दृष्ट्वा एतौ सुरसुतोपमौ १९
वालिप्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ
राजानो बहुमित्राश्च विश्वासो नात्र हि क्षमः २०
अरयश्च मनुष्येण विज्ञेयाश्छन्नचारिणः
विश्वस्तानामविश्वस्ताश्छिद्रेषु प्रहरन्ति हि २१
कृत्येषु वाली मेधावी राजानो बहुदर्शनाः

भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्नरैः २२
तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवंगम
शङ्कितानां प्रकारैश्च रूपव्याभाषणेन च २३
लक्षयस्व तयोर्भावं प्रहृष्टमनसौ यदि
विश्वासयन्प्रशंसाभिरिङ्गितैश्च पुनः पुनः २४
ममैवाभिमुखं स्थित्वा पृच्छ त्वं हरिपुंगव
प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ २५
शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं प्लवंगम
व्याभाषितैर्वा रूपैर्वा विज्ञेया दुष्टतानयोः २६
इत्येवं कपिराजेन संदिष्टो मारुतात्मजः
चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ २७
तथेति संपूज्य वचस्तु तस्य
कपेः सुभीतस्य दुरासदस्य
महानुभावो हनुमान्ययौ तदा
स यत्र रामोऽतिबलश्च लक्ष्मणः २८

इति श्रीरामायणे किष्किन्धाकाण्डे द्वितीयः सर्गः २

४-३

वचो विज्ञाय हनुमान्सुग्रीवस्य महात्मनः
पर्वतादृश्यमूकात्तु पुप्लुवे यत्र राघवौ १
स तत्र गत्वा हनुमान्बलवान्वानरोत्तमः
उपचक्राम तौ वाग्भिर्मृद्वीभिः सत्यविक्रमः २
स्वकं रूपं परित्यज्य भिक्षुरूपेण वानरः
आबभाषे च तौ वीरौ यथावत्प्रशशंस च ३
राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ
देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ ४
त्रासयन्तौ मृगगणानन्यांश्च वनचारिणः
पम्पातीररुहान्वृक्षान्वीक्षमाणौ समन्ततः ५
इमां नदीं शुभजलां शोभयन्तौ तरस्विनौ
धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ ६

सिंहविप्रेक्षितौ वीरौ सिंहातिबलविक्रमौ
शक्रचापनिभे चापे प्रगृह्य विपुलैर्भुजैः ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधिविश्वे निषेदुः
यस्तन्न वेद किमृचा करिष्यति
य इत्तद्विदुस्त इमे समासते

श्रीमन्तौ रूपसम्पन्नौ वृषभश्रेष्ठविक्रमौ
हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ ८
प्रभया पर्वतेन्द्रोऽय युवयोरवभासितः
राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ ९
पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ
अन्योन्यसदृशौ वीरौ देवलोकादिवागतौ १०
यदृच्छयेव संप्राप्तौ चन्द्रसूर्यौ वसुंधराम्
विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ ११
सिंहस्कन्धौ महासत्त्वौ समदाविव गोवृषौ
आयताश्च सुवृत्ताश्च बाहवः परिघोत्तमाः
सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः १२
उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम्
ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम् १३
इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने
प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते १४
संपूर्णा निशितैर्बाणैस्तूणाश्च शुभदर्शनाः
जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव पन्नगैः १५
महाप्रमाणौ विपुलौ तप्तहाटकभूषितौ
खड्गावेतौ विराजेते निर्मुक्तभुजगाविव १६
एवं मां परिभाषन्तं कस्माद्वै नाभिभाषथः १७
सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः
वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः १८
प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना
राज्ञा वानरमुख्यानां हनुमान्नाम वानरः १९

युवाभ्यां सह धर्मात्मा सुग्रीवः सख्यमिच्छति
तस्य मां सचिवं वित्तं वानरं पवनात्मजम् २०
भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रियकाम्यया
ऋृश्यमूकादिह प्राप्तं कामगं कामरूपिणम् २१
एवमुक्त्वा तु हनुमांस्तौ वीरौ रामलक्ष्मणौ
वाक्यज्ञौ वाक्यकुशलः पुनर्नोवाच किंचन २२
एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत्
प्रहृष्टवदनः श्रीमान्भ्रातरं पार्श्वतः स्थितम् २३
सचिवोऽय कपीन्द्रस्य सुग्रीवस्य महात्मनः
तमेव काङ्क्षमाणस्य ममान्तिकमुपागतः २४
तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम्
वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिंदमम् २५
इति श्रीरामायणे किष्किन्धाकाण्डे तृतीयः सर्गः ३

४-४

ततः प्रहृष्टो हनुमान्कृत्यवानिति तद्वचः
श्रुत्वा मधुरसंभाषं सुग्रीवं मनसा गतः १
भव्यो राज्यागमस्तस्य सुग्रीवस्य महात्मनः
यदयं कृत्यवान्प्राप्तः कृत्यं चैतदुपागतम् २
ततः परमसंहृष्टो हनूमान्प्लवगर्षभः
प्रत्युवाच ततो वाक्यं रामं वाक्यविशारदः ३
किमर्थं त्वं वनं घोरं पम्पाकाननमण्डितम्
आगतः सानुजो दुर्गं नानाव्यालमृगायुतम् ४
तस्य तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः
आचचक्षे महात्मानं रामं दशरथात्मजम् ५
राजा दशरथो नाम द्युतिमान्धर्मवत्सलः
तस्यायं पूर्वजः पुत्रो रामो नाम जनैः श्रुतः ६
शरण्यः सर्वभूतानां पितुर्निर्देशपारगः
वीरो दशरथस्यायं पुत्राणां गुणवत्तरः ७
राज्याद्भ्रष्टो वने वस्तुं मया सार्धमिहागतः

भार्यया च महातेजाः सीतयानुगतो वशी
दिनक्षये महातेजाः प्रभयेव दिवाकरः ८
अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः
कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः ९
सुखार्हस्य महार्हस्य सर्वभूतहितात्मनः
एश्वर्येण विहीनस्य वनवासाश्रितस्य च १०
रक्षसापहृता भार्या रहिते कामरूपिणा
तच्च न ज्ञायते रक्षः पत्नी येनास्य सा हृता ११
दनुर्नाम श्रियः पुत्रः शापाद्राक्षसतां गतः
आख्यातस्तेन सुग्रीवः समर्थो वानराधिपः १२
स ज्ञास्यति महावीर्यस्तव भार्यापहारिणम्
एवमुक्त्वा दनुः स्वर्गं भ्राजमानो गतः सुखम् १३
एतत्ते सर्वमाख्यातं याथातथ्येन पृच्छतः
अहं चैव हि रामश्च सुग्रीवं शरणं गतौ १४
एष दत्त्वा च वित्तानि प्राप्य चानुत्तमं यशः
लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति १५
शोकाभिभूते रामे तु शोकार्ते शरणं गते
कर्तुमर्हति सुग्रीवः प्रसादं सह यूथपैः १६
एवं ब्रुवाणं सौमित्रिं करुणं साश्रुपातनम्
हनूमान्प्रत्युवाचेदं वाक्यं वाक्यविशारदः १७
ईदृशा बुद्धिसम्पन्ना जितक्रोधा जितेन्द्रियाः
द्रष्टव्या वानरेन्द्रेण दिष्ट्या दर्शनमागताः १८
स हि राज्याच्च विभ्रष्टः कृतवैरश्च वालिना
हृतदारो वने त्रस्तो भ्रात्रा विनिकृतो भृशम् १९
करिष्यति स साहाय्यं युवयोर्भास्करात्मजः
सुग्रीवः सह चास्माभिः सीतायाः परिमार्गणे २०
इत्येवमुक्त्वा हनुमाञ्श्लक्ष्णं मधुरया गिरा
वभाषे सोऽभिगच्छामः सुग्रीवमिति राघवम् २१
एवं ब्रुवाणं धर्मात्मा हनूमन्तं स लक्ष्मणः
प्रतिपूज्य यथान्यायमिदं प्रोवाच राघवम् २२

कपिः कथयते हृष्टो यथायं मारुतात्मजः
कृत्यवान्सोऽपि संप्राप्तः कृतकृत्योऽसि राघव २३
प्रसन्नमुखवर्णश्च व्यक्तं हृष्टश्च भाषते
नानृतं वक्ष्यते वीरो हनूमान्मारुतात्मजः २४
ततः स तु महाप्राज्ञो हनूमान्मारुतात्मजः
जगामादाय तौ वीरौ हरिराजाय राघवौ २५
स तु विपुलयशाः कपिप्रवीरः
पवनसुतः कृतकृत्यवत्प्रहृष्टः
गिरिवरमुरुविक्रमः प्रयातः
स शुभमतिः सह रामलक्ष्मणाभ्याम् २६
इति श्रीरामायणे किष्किन्धाकाण्डे चतुर्थः सर्गः ४

४-५

ऋश्यमूकात्तु हनुमान्गत्वा तं मलयं गिरिम्
आचचक्षे तदा वीरौ कपिराजाय राघवौ १
अयं रामो महाप्राज्ञः संप्राप्तो दृढविक्रमः
लक्ष्मणेन सह भ्रात्रा रामोऽय सत्यविक्रमः २
इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः
धर्मे निगदितश्चैव पितुर्निर्देशपालकः ३
तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः
रक्षसापहृता भार्या स त्वां शरणमागतः ४
राजसूयाश्वमेधैश्च वह्निर्येनाभितर्पितः
दक्षिणाश्च तथोत्सृष्टा गावः शतसहस्रशः ५
तपसा सत्यवाक्येन वसुधा येन पालिता
स्त्रीहेतोस्तस्य पुत्रोऽय रामस्त्वां शरणं गतः ६
भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ
प्रतिगृह्यार्चयस्वेमौ पूजनीयतमावुभौ ७
श्रुत्वा हनुमतो वाक्यं सुग्रीवो हृष्टमानसः
भयं स राघवाद्घोरं प्रजहौ विगतज्वरः ८
स कृत्वा मानुषं रूपं सुग्रीवः प्लवगाधिपः

दर्शनीयतमो भूत्वा प्रीत्या प्रोवाच राघवम् ९
भवान्धर्मविनीतश्च विक्रान्तः सर्ववत्सलः
आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः १०
तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो
यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ११
रोचते यदि वा सख्यं बाहुरेष प्रसारितः
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा १२
एतत्तु वचनं श्रुत्वा सुग्रीवस्य सुभाषितम्
संप्रहृष्टमना हस्तं पीडयामास पाणिना
हृद्यं सौहृदमालम्ब्य पर्यष्वजत पीडितम् १३
ततो हनूमान्संत्यज्य भिक्षुरूपमरिंदमः
काष्ठयोः स्वेन रूपेण जनयामास पावकम् १४
दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम्
तयोर्मध्ये तु सुप्रीतो निदधे सुसमाहितः १५
ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम्
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ १६
ततः सुप्रीतमनसौ तावुभौ हरिराघवौ
अन्योन्यमभिवीक्षन्तौ न तृप्तिमुपजग्मतुः १७
ततः सर्वार्थविद्वांसं रामं दशरथात्मजम्
सुग्रीवः प्राह तेजस्वी वाक्यमेकमनास्तदा १८
इति श्रीरामायणे किष्किन्धाकाण्डे पञ्चमः सर्गः ५

४-६

अयमाख्याति मे राम सचिवो मन्त्रिसत्तमः
हनुमान्यन्निमित्तं त्वं निर्जनं वनमागतः १
लक्ष्मणेन सह भ्रात्रा वसतश्च वने तव
रक्षसापहृता भार्या मैथिली जनकात्मजा २
त्वया वियुक्ता रुदती लक्ष्मणेन च धीमता
अन्तरं प्रेप्सुना तेन हत्वा गृध्रं जटायुषम् ३
भार्यावियोगजं दुःखं नचिरात्त्वं विमोक्ष्यसे

अहं तामानयिष्यामि नष्टां वेदश्रुतिं यथा ४
रसातले वा वर्तन्तीं वर्तन्तीं वा नभस्तले
अहमानीय दास्यामि तव भार्यामरिंदम ५
इदं तथ्यं मम वचस्त्वमवेहि च राघव
त्यज शोकं महाबाहो तां कान्तामानयामि ते ६
अनुमानात्तु जानामि मैथिली सा न संशयः
ह्रियमाणा मया दृष्टा रक्षसा क्रूरकर्मणा ७
क्रोशन्ती राम रामेति लक्ष्मणेति च विस्वरम्
स्फुरन्ती रावणस्याङ्के पन्नगेन्द्रवधूर्यथा ८
आत्मना पञ्चमं मां हि दृष्ट्वा शैलतटे स्थितम्
उत्तरीयं तया त्यक्तं शुभान्याभरणानि च ९
तान्यस्माभिर्गृहीतानि निहितानि च राघव
आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि १०
तमब्रवीत्ततो रामः सुग्रीवं प्रियवादिनम्
आनयस्व सखे शीघ्रं किमर्थं प्रविलम्बसे ११
एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहाम्
प्रविवेश ततः शीघ्रं राघवप्रियकाम्यया १२
उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च
इदं पश्येति रामाय दर्शयामास वानरः १३
ततो गृहीत्वा तद्वासः शुभान्याभरणानि च
अभवद्बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः १४
सीतास्नेहप्रवृत्तेन स तु बाष्पेण दूषितः
हा प्रियेति रुदन्धैर्यमुत्सृज्य न्यपतत्क्षितौ १५
हृदि कृत्वा स बहुशस्तमलंकारमुत्तमम्
निशश्वास भृशं सर्पो बिलस्थ इव रोषितः १६
अविच्छिन्नाश्रुवेगस्तु सौमित्रिं वीक्ष्य पार्श्वतः
परिदेवयितुं दीनं रामः समुपचक्रमे १७
पश्य लक्ष्मण वैदेह्या संत्यक्तं ह्रियमाणया
उत्तरीयमिदं भूमौ शरीराद्भूषणानि च १८
शाद्वलिन्यां ध्रुवं भूम्यां सीतया ह्रियमाणया

उत्सृष्टं भूषणमिदं तथारूपं हि दृश्यते १९
ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया
रक्षसा रौद्ररूपेण मम प्राणसमा प्रिया २०
क्व वा वसति तद्रक्षो महद्व्यसनदं मम
यन्निमित्तमहं सर्वान्नाशयिष्यामि राक्षसान् २१
हरता मैथिलीं येन मां च रोषयता भृशम्
आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् २२
मम दयिततमा हृता वना
द्रजनिचरेण विमथ्य येन सा
कथय मम रिपुं तमद्य वै
प्लवगपते यमसंनिधिं नयामि २३
इति श्रीरामायणे किष्किन्धाकाण्डे षष्ठः सर्गः ६

४-७

एवमुक्तस्तु सुग्रीवो रामेणार्तेन वानरः
अब्रवीत्प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः १
न जाने निलयं तस्य सर्वथा पापरक्षसः
सामर्थ्यं विक्रमं वापि दौष्कुलेयस्य वा कुलम् २
सत्यं तु प्रतिजानामि त्यज शोकमरिंदम
करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ३
रावणं सगणं हत्वा परितोष्यात्मपौरुषम्
तथास्मि कर्ता नचिराद्यथा प्रीतो भविष्यसि ४
अलं वैक्लव्यमालम्ब्य धैर्यमात्मगतं स्मर
त्वद्विधानां न सदृशमीदृशं बुद्धिलाघवम् ५
मयापि व्यसनं प्राप्तं भार्याहरणजं महत्
न चाहमेवं शोचामि न च धैर्यं परित्यजे ६
नाहं तामनुशोचामि प्राकृतो वानरोऽपि सन्
महात्मा च विनीतश्च किं पुनर्धृतिमान्भवान् ७
बाष्पमापतितं धैर्यान्निग्रहीतुं त्वमर्हसि
मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ८

व्यसने वार्थकृच्छ्रे वा भये वा जीवितान्तगे
विमृशन्वै स्वया बुद्ध्या धृतिमान्नावसीदति ९
बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते
स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले १०
एषोऽञ्जलिर्मया बद्धः प्रणयात्त्वां प्रसादये
पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ११
ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम्
तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि १२
हितं वयस्यभावेन ब्रूमि नोपदिशामि ते
वयस्यतां पूजयन्मे न त्वं शोचितुमर्हसि १३
मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः
मुखमश्रुपरिक्लिन्नं वस्त्रान्तेन प्रमार्जयत् १४
प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात्प्रभुः
संपरिष्वज्य सुग्रीवमिदं वचनमब्रवीत् १५
कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च
अनुरूपं च युक्तं च कृतं सुग्रीव तत्त्वया १६
एष च प्रकृतिस्थोऽहमनुनीतस्त्वया सखे
दुर्लभो हीदृशो बन्धुरस्मिन्काले विशेषतः १७
किं तु यत्नस्त्वया कार्यो मैथिल्याः परिमार्गणे
राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः १८
मया च यदनुष्ठेयं विस्रब्धेन तदुच्यताम्
वर्षास्विव च सुक्षेत्रे सर्वं संपद्यते तव १९
मया च यदिदं वाक्यमभिमानात्समीरितम्
तत्त्वया हरिशार्दूल तत्त्वमित्युपधार्यताम् २०
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन
एतत्ते प्रतिजानामि सत्येनैव शपामि ते २१
ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह
राघवस्य वचः श्रुत्वा प्रतिज्ञातं विशेषतः २२
महानुभावस्य वचो निशम्य
हरिर्नराणामृषभस्य तस्य

कृतं स मेने हरिवीरमुख्य
स्तदा स्वकार्यं हृदयेन विद्वान् २३
इति श्रीरामायणे किष्किन्धाकाण्डे सप्तमः सर्गः ७

४-८

परितुष्टस्तु सुग्रीवस्तेन वाक्येन वानरः
लक्ष्मणस्याग्रजं राममिदं वचनमब्रवीत् १
सर्वथाहमनुग्राह्यो देवतानामसंशयः
उपपन्नगुणोपेतः सखा यस्य भवान्मम २
शक्यं खलु भवेद्राम सहायेन त्वयानघ
सुरराज्यमपि प्राप्तुं स्वराज्यं किं पुनः प्रभो ३
सोऽह सभाज्यो बन्धूनां सुहृदां चैव राघव
यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम् ४
अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः
न तु वक्तुं समर्थोऽह स्वयमात्मगतान्गुणान् ५
महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनाम्
निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ६
रजतं वा सुवर्णं वा वस्त्राण्याभरणानि वा
अविभक्तानि साधूनामवगच्छन्ति साधवः ७
आढ्यो वापि दरिद्रो वा दुःखितः सुखितोऽपि वा
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ८
धनत्यागः सुखत्यागो देहत्यागोऽपि वा पुनः
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ९
तत्तथेत्यब्रवीद्रामः सुग्रीवं प्रियवादिनम्
लक्ष्मणस्याग्रतो लक्ष्म्या वासवस्येव धीमतः १०
ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम्
सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ११
स ददर्श ततः सालमविदूरे हरीश्वरः
सुपुष्पमीषत्पत्राढ्यं भ्रमरैरुपशोभितम् १२
तस्यैकां पर्णबहुलां भङ्क्त्वा शाखां सुपुष्पिताम्

सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः १३
तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम्
सालशाखां समुत्पाट्य विनीतमुपवेशयत् १४
ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा
उवाच प्रणयाद्रामं हर्षव्याकुलिताक्षरम् १५
अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः
ऋश्यमूकं गिरिवरं हृतभार्यः सुदुःखितः १६
सोऽह त्रस्तो भये मग्नो वसाम्युद्भ्रान्तचेतनः
वालिना निकृतो भ्रात्रा कृतवैरश्च राघव १७
वालिनो मे भयार्तस्य सर्वलोकाभयंकर
ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि १८
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः
प्रत्युवाच स काकुत्स्थः सुग्रीवं प्रहसन्निव १९
उपकारफलं मित्रमपकारोऽरिलक्षणम्
अद्यैव तं हनिष्यामि तव भार्यापहारिणम् २०
इमे हि मे महावेगाः पत्रिणस्तिग्मतेजसः
कार्तिकेयवनोद्भूताः शरा हेमविभूषिताः २१
कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसंनिभाः
सुपर्वाणः सुतीक्ष्णाग्रा सरोषा भुजगा इव २२
भ्रातृसंज्ञममित्रं ते वालिनं कृतकिल्बिषम्
शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् २३
राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् २४
राम शोकाभिभूतोऽह शोकार्तानां भवान्गतिः
वयस्य इति कृत्वा हि त्वय्यहं परिदेवये २५
त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकः
कृतः प्राणैर्बहुमतः सत्येनापि शपाम्यहम् २६
वयस्य इति कृत्वा च विस्रब्धं प्रवदाम्यहम्
दुःखमन्तर्गतं यन्मे मनो दहति नित्यशः २७
एतावदुक्त्वा वचनं बाष्पदूषितलोचनः

बाष्पोपहतया वाचा नोच्चैः शक्नोति भाषितुम् २८
बाष्पवेगं तु सहसा नदीवेगमिवागतम्
धारयामास धैर्येण सुग्रीवो रामसंनिधौ २९
संनिगृह्य तु तं बाष्पं प्रमृज्य नयने शुभे
विनिःश्वस्य च तेजस्वी राघवं पुनरब्रवीत् ३०
पुराहं वालिना राम राज्यात्स्वादवरोपितः
परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा ३१
हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी
सुहृदश्च मदीया ये संयता बन्धनेषु ते ३२
यत्नवांश्च सुदुष्टात्मा मद्विनाशाय राघव
बहुशस्तत्प्रयुक्ताश्च वानरा निहता मया ३३
शङ्कया त्वेतया चाहं दृष्ट्वा त्वामपि राघव
नोपसर्पाम्यहं भीतो भये सर्वे हि बिभ्यति ३४
केवलं हि सहाया मे हनुमत्प्रमुखास्त्विमे
अतोऽह धारयाम्यद्य प्राणान्कृच्छ्रगतोऽपि सन् ३५
एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः
सह गच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति च स्थिते ३६
संक्षेपस्त्वेष मे राम किमुक्त्वा विस्तरं हि ते
स मे जेष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः ३७
तद्विनाशाद्धि मे दुःखं प्रनष्टं स्यादनन्तरम्
सुखं मे जीवितं चैव तद्विनाशनिबन्धनम् ३८
एष मे राम शोकान्तः शोकार्तेन निवेदितः
दुःखितोऽदुखितो वापि सख्युर्नित्यं सखा गतिः ३९
श्रुत्वैतच्च वचो रामः सुग्रीवमिदमब्रवीत्
किंनिमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः ४०
सुखं हि कारणं श्रुत्वा वैरस्य तव वानर
आनन्तर्यं विधास्यामि संप्रधार्य बलाबलम् ४१
बलवान्हि ममामर्षः श्रुत्वा त्वामवमानितम्
वर्धते हृदयोत्कम्पी प्रावृड्वेग इवाम्भसः ४२
हृष्टः कथय विस्रब्धो यावदारोप्यते धनुः

सृष्टश्च हि मया बाणो निरस्तश्च रिपुस्तव ४३
एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना
प्रहर्षमतुलं लेभे चतुर्भिः सह वानरैः ४४
ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे
वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ४५
इति श्रीरामायणे किष्किन्धाकाण्डे अष्टमः सर्गः ८

४-९

वाली नाम मम भ्राता ज्येष्ठः शत्रुनिषूदनः
पितुर्बहुमतो नित्यं मम चापि तथा पुरा १
पितर्युपरतेऽस्माकं ज्येष्ठोऽयमिति मन्त्रिभिः
कपीनामीश्वरो राज्ये कृतः परमसंमतः २
राज्यं प्रशासतस्तस्य पितृपैतामहं महत्
अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत्स्थितः ३
मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः
तेन तस्य महद्वैरं स्त्रीकृतं विश्रुतं पुरा ४
स तु सुप्ते जने रात्रौ किष्किन्धाद्वारमागतः
नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ५
प्रसुप्तस्तु मम भ्राता नर्दितं भैरवस्वनम्
श्रुत्वा न ममृषे वाली निष्पपात जवात्तदा ६
स तु वै निःसृतः क्रोधात्तं हन्तुमसुरोत्तमम्
वार्यमाणस्ततः स्त्रीभिर्मया च प्रणतात्मना ७
स तु निर्धूय सर्वान्नो निर्जगाम महाबलः
ततोऽहमपि सौहार्दान्निःसृतो वालिना सह ८
स तु मे भ्रातरं दृष्ट्वा मां च दूरादवस्थितम्
असुरो जातसंत्रासः प्रदुद्राव तदा भृशम् ९
तस्मिन्द्रवति संत्रस्ते ह्यावां द्रुततरं गतौ
प्रकाशोऽपि कृतो मार्गश्चन्द्रेणोद्गच्छता तदा १०
स तृणैरावृतं दुर्गं धरण्या विवरं महत्
प्रविवेशासुरो वेगादावामासाद्य विष्ठितौ ११

तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः
मामुवाच तदा वाली वचनं क्षुभितेन्द्रियः १२
इह त्वं तिष्ठ सुग्रीव बिलद्वारि समाहितः
यावदत्र प्रविश्याहं निहन्मि समरे रिपुम् १३
मया त्वेतद्वचः श्रुत्वा याचितः स परंतप
शापयित्वा च मां पद्भ्यां प्रविवेश बिलं तदा १४
तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः
स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत १५
अहं तु नष्टं तं ज्ञात्वा स्नेहादागतसंभ्रमः
भ्रातरं न हि पश्यामि पापशङ्कि च मे मनः १६
अथ दीर्घस्य कालस्य बिलात्तस्माद्विनिःसृतम्
सफेनं रुधिरं रक्तमहं दृष्ट्वा सुदुःखितः १७
नर्दतामसुराणां च ध्वनिर्मे श्रोत्रमागतः
निरस्तस्य च संग्रामे क्रोशतो निःस्वनो गुरोः १८
अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं हतम्
पिधाय च बिलद्वारं शिलया गिरिमात्रया
शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे १९
गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिः श्रुतम्
ततोऽह तैः समागम्य समेतैरभिषेचितः २०
राज्यं प्रशासतस्तस्य न्यायतो मम राघव
आजगाम रिपुं हत्वा वाली तमसुरोत्तमम् २१
अभिषिक्तं तु मां दृष्ट्वा क्रोधात्संरक्तलोचनः
मदीयान्मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् २२
निग्रहेऽपि समर्थस्य तं पापं प्रति राघव
न प्रावर्तत मे बुद्धिर्भ्रातृगौरवयन्त्रिता २३
मानयंस्तं महात्मानं यथावच्चाभ्यवादयम्
उक्ताश्च नाशिषस्तेन संतुष्टेनान्तरात्मना २४
इति श्रीरामायणे किष्किन्धाकाण्डे नवमः सर्गः ९

४-१०

ततः क्रोधसमाविष्टं संरब्धं तमुपागतम्
ग्रहं प्रसादयांचक्रे भ्रातरं प्रियकाम्यया १
दिष्ट्यासि कुशली प्राप्तो निहतश्च त्वया रिपुः
ग्रनाथस्य हि मे नाथस्त्वमेकोऽनाथनन्दनः २
इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम्
छत्रं सवालव्यजनं प्रतीच्छस्व मयोद्यतम् ३
त्वमेव राजा मानार्हः सदा चाहं यथा पुरा
न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम् ४
मा च रोषं कृथाः सौम्य मयि शत्रुनिबर्हण
याचे त्वां शिरसा राजन्मया बद्धोऽयमञ्जलि ५
बलादस्मि समागम्य मन्त्रिभिः पुरवासिभिः
राजभावे नियुक्तोऽह शून्यदेशजिगीषया ६
स्निग्धमेवं ब्रुवाणं मां स तु निर्भर्त्स्य वानरः
धिक्त्वामिति च मामुक्त्वा बहु तत्तदुवाच ह ७
प्रकृतीश्च समानीय मन्त्रिणश्चैव संमतान्
मामाह सुहृदां मध्ये वाक्यं परमगर्हितम् ८
विदितं वो यथा रात्रौ मायावी स महासुरः
मां समाह्वयत क्रूरो युद्धाकाङ्क्षी सुदुर्मतिः ९
तस्य तद्गर्जितं श्रुत्वा निःसृतोऽह नृपालयात्
ग्रनुयातश्च मां तूर्णमयं भ्राता सुदारुणः १०
स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः
प्राद्रवद्भयसंत्रस्तो वीक्ष्यावां तमनुद्रुतौ
ग्रनुद्रुतस्तु वेगेन प्रविवेश महाबिलम् ११
तं प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम्
ग्रयमुक्तोऽथ मे भ्राता मया तु क्रूरदर्शनः १२
ग्रहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम्
बिलद्वारि प्रतीक्ष त्वं यावदेनं निहन्म्यहम् १३
स्थितोऽयमिति मत्वा तु प्रविष्टोऽह दुरासदम्
तं च मे मार्गमाणस्य गतः संवत्सरस्तदा १४
स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः

प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु २
अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया
अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् ३
अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः
साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् ४
पूजयित्वाङ्गदं सर्वे वानरा वानरर्षभम्
जग्मुर्मधुवनं यत्र नदीवेग इव द्रुतम् ५
ते प्रहृष्टा मधुवनं पालानाक्रम्य वीर्यतः
अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् ६
उत्पत्य च ततः सर्वे वनपालान्समागताः
ताडयन्ति स्म शतशः सक्तान्मधुवने तदा ७
मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते
घ्नन्ति स्म सहिताः सर्वे भक्षयन्ति तथापरे ८
केचित्पीत्वापविध्यन्ति मधूनि मधुपिङ्गलाः
मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः ९
अपरे वृक्षमूलेषु शाखां गृह्य व्यवस्थिताः
अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते १०
उन्मत्तभूताः प्लवगा मधुमत्ताश्च हृष्टवत्
क्षिपन्त्यपि तथान्योन्यं स्खलन्त्यति तथापरे ११
केचित्क्ष्वेडान्प्रकुर्वन्ति केचित्कूजन्ति हृष्टवत्
हरयो मधुना मत्ताः केचित्सुप्ता महीतले १२
येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु
तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः १३
जानुभिश्च प्रकृष्टाश्च देवमार्गं च दर्शिताः
अब्रुवन्परमोद्विग्ना गत्वा दधिमुखं वचः १४
हनूमता दत्तवर्हतं मधुवनं बलात्
वयं च जानुभिः कृष्टा देवमार्गं च दर्शिताः १५
ततो दधिमुखः क्रुद्धो वनपस्तत्र वानरः
हतं मधुवनं श्रुत्वा सान्त्वयामास तान्हरीन् १६
एतागच्छत गच्छामो वानरानतिदर्पितान्

बलेनावारयिष्यामो मधु भक्षयतोवयम् १७
श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः
पुनर्वीरा मधुवनं तेनैव सहिता ययुः १८
मध्ये चैषां दधिमुखः प्रगृह्य सुमहातरुम्
समभ्यधावद्वेगेन ते च सर्वे प्लवंगमाः १९
ते शिलाः पादपांश्चापि पाषाणांश्चापि वानराः
गृहीत्वाभ्यागमन्क्रुद्धा यत्र ते कपिकुञ्जराः २०
ते स्वामिवचनं वीरा हृदयेष्ववसज्य तत्
त्वरया ह्यभ्यधावन्त सालतालशिलायुधाः २१
वृक्षस्थांश्च तलस्थांश्च वानरान्बलदर्पितान्
अभ्यक्रामन्तते वीराः पालास्तत्र सहस्रशः २२
अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुंगवाः
अभ्यधावन्त वेगेन हनूमत्प्रमुखास्तदा २३
तं सवृक्षं महाबाहुमापतन्तं महाबलम्
आर्यकं प्राहरत्तत्र बाहुभ्यां कुपितोऽङ्गदः २४
मदान्धश्च न वेदैनमार्यकोऽय ममेति सः
अथैनं निष्पिपेषाशु वेगवद्विसुध्तिले २५
स भग्नबाहुर्विमुख्ि विह्वलः शोणितोक्षितः
मुमोह सहसा वीरो मूहूर्तं कपिकुञ्जरः २६
स कथंचिद्विमुक्तस्तैर्वानरैर्वानरर्षभः
उवाचैकान्तमागम्य भृत्यांस्तान्समुपागतान् २७
एतेतिष्ठन्तु गच्छामो भर्ता नो यत्र वानरः
सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति २८
सर्वं चैवाङ्गदे दोषं श्रावयिष्यामि पार्थिवे
अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् २९
इष्टं मधुवनं ह्येतत्सुग्रीवस्य महात्मनः
पितृपैतामहं दिव्यं देवैरपि दुरासदम् ३०
स वानरानिमान्सर्वान्मधुलुब्धान्गतायुषः
घातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ३१
वध्या ह्येते दुरात्मानो नृपाज्ञापरिभाविनः

अमर्षप्रभवो रोषः सफलो नो भविष्यति ३२
एवमुक्त्वा दधिमुखो वनपालान्महाबलः
जगाम सहसोत्पत्य वनपालैः समन्वितः ३३
निमेषान्तरमात्रेण स हि प्राप्तो वनालयः
सहस्रांशुसुतो धीमान्सुग्रीवो यत्र वानरः ३४
रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च
समप्रतिष्ठां जगतीमाकाशान्निपपात ह ३५
स निपत्य महावीर्यः सर्वैस्तैः परिवारितः
हरिर्दधिमुखः पालैः पालानां परमेश्वरः ३६
स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम्
सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ३७
इति श्रीरामायणे सुन्दरकाण्डे षष्टितमः सर्गः ६०

५-६१

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः
दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह १
उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम
अभयं ते भवेद्वीर सत्यमेवाभिधीयताम् २
स तु विश्वासितस्तेन सुग्रीवेण महात्मना
उत्थाय च महाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ३
नैवर्क्षरजसा राजन्न त्वया नापि वालिना
वनं निसृष्टपूर्वं हि भक्षितं तत्तु वानरैः ४
एभिः प्रधर्षिताश्चैव वारिता वनरक्षिभिः
मधून्यचिन्तयित्वेमान्भक्षयन्ति पिबन्ति च ५
शिष्टमत्रापविध्यन्ति भक्षयन्ति तथापरे
निवार्यमाणास्ते सर्वे भ्रुवौ वै दर्शयन्ति हि ६
इमे हि संरब्धतरास्तथा तैः संप्रधर्षिताः
वारयन्तो वनात्तस्मात्क्रुद्धैर्वानरपुंगवैः ७
ततस्तैर्बहुभिर्वीरैर्वानरैर्वानरर्षभाः
संरक्तनयनैः क्रोधाद्धरयः संप्रचालिताः ८

पाणिभिर्निहताः केचित्केचिज्ञानुभिराहताः
प्रकृष्टाश्च यथाकामं देवमार्गं च दर्शिताः ९
एवमेते हताः शूरास्त्वयि तिष्ठति भर्तरि
कृत्स्नं मधुवनं चैव प्रकामं तैः प्रभक्ष्यते १०
एवं विज्ञाप्यमानं तु सुग्रीवं वानरर्षभम्
अपृच्छित्तं महाप्राज्ञो लक्ष्मणः परवीरहा ११
किमयं वानरो राजन्वनपः प्रत्युपस्थितः
कं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् १२
एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना
लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः १३
आर्य लक्ष्मण संप्राह वीरो दधिमुखः कपिः
अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः १४
नैषामकृतकृत्यानामीदृशः स्यादुपक्रमः
वनं यथाभिपन्नं तैः साधितं कर्म वानरैः १५
दृष्टा देवी न संदेहो न चान्येन हनूमता
न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः १६
कार्यसिद्धिर्हनुमति मतिश्च हरिपुंगवे
व्यवसायश्च वीर्यं च श्रुतं चापि प्रतिष्ठितम् १७
जाम्बवान्यत्र नेता स्यादङ्गदश्च बलेश्वरः
हनूमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा १८
अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल
विचित्य दक्षिणामाशामागतैर्हरिपुंगवैः १९
आगतैश्च प्रविष्टं तद्यथा मधुवनं हि तैः
धर्षितं च वनं कृत्स्नमुपयुक्तं च वानरैः
वारिताः सहिताः पालास्तथा जानुभिराहताः २०
एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह
नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः २१
दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः
अभिगम्य यथा सर्वे पिबन्ति मधु वानराः २२
न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ

वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः २३
ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः
श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् २४
प्राहृष्यत भृशं रामो लक्ष्मणश्च महायशाः
श्रुत्वा दधिमुखस्येदं सुग्रीवस्तु प्रहृष्य च
वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत २५
प्रीतोऽस्मि सौम्य यद्भुक्तं वनं तैः कृतकर्मभिः
मर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् २६
इच्छामि शीघ्रं हनुमत्प्रधाना
ञ्शाखामृगांस्तान्मृगराजदर्पान्
द्रष्टुं कृतार्थान्सह राघवाभ्यां
श्रोतुं च सीताधिगमे प्रयत्नम् २७
इति श्रीरामायणे सुन्दरकाण्डे एकषष्टितमः सर्गः ६१

५-६२

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः
राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् १
स प्रणम्य च सुग्रीवं राघवौ च महाबलौ
वानरैः सहितैः शूरैर्दिवमेवोत्पपात ह २
स यथैवागतः पूर्वं तथैव त्वरितो गतः
निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ३
स प्रविष्टो मधुवनं ददर्श हरियूथपान्
विमदानुद्धतान्सर्वान्मेहमानान्मधूदकम् ४
स तानुपागमद्वीरो बद्ध्वा करपुटाञ्जलिम्
उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ५
सौम्य रोषो न कर्तव्यो यदेभिरभिवारितः
अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ६
युवराजस्त्वमीशश्च वनस्यास्य महाबल
मौर्ख्यात्पूर्वं कृतो दोषस्तद्भवान्क्षन्तुमर्हति ७
यथैव हि पिता तेऽभूत्पूर्वं हरिगणेश्वरः

तथा त्वमपि सुग्रीवो नान्यस्तु हरिसत्तम ८
आख्यातं हि मया गत्वा पितृव्यस्य तवानघ
इहोपयानं सर्वेषामेतेषां वनचारिणाम् ९
स त्वदागमनं श्रुत्वा सहैभिर्हरियूथपैः
प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् १०
प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः
शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः ११
श्रुत्वा दधिमुखस्यैतद्वचनं श्लक्ष्णमङ्गदः
अब्रवीत्तान्हरिश्रेष्ठो वाक्यं वाक्यविशारदः १२
शङ्के श्रुतोऽय वृत्तान्तो रामेण हरियूथपाः
तत्क्षमं नेह नः स्थातुं कृते कार्ये परंतपाः १३
पीत्वा मधु यथाकामं विश्रान्ता वनचारिणः
किं शेषं गमनं तत्र सुग्रीवो यत्र मे गुरुः १४
सर्वे यथा मां वक्ष्यन्ति समेत्य हरियूथपाः
तथास्मि कर्ता कर्तव्ये भवद्भिः परवानहम् १५
नाज्ञापयितुमीशोऽह युवराजोऽस्मि यद्यपि
अयुक्तं कृतकर्माणो यूयं धर्षयितुं मया १६
ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचनमव्ययम्
प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः १७
एवं वक्ष्यति को राजन्प्रभुः सन्वानरर्षभ
एश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते १८
तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित्
संनतिर्हि तवाख्याति भविष्यच्छुभभाग्यताम् १९
सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः
स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः २०
त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम्
क्वचिद्गन्तुं हरिश्रेष्ठ ब्रूमः सत्यमिदं तु ते २१
एवं तु वदतां तेषामङ्गदः प्रत्यभाषत
बाढं गच्छाम इत्युक्त्वा उत्पपात महीतलात् २२
उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः

कृत्वाकाशं निराकाशं यज्ञोत्क्षिप्ता इवानलाः २३
तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवंगमाः
विनदन्तो महानादं घना वातेरिता यथा २४
अङ्गदे ह्यननुप्राप्ते सुग्रीवो वानराधिपः
उवाच शोकोपहतं रामं कमललोचनम् २४
समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः
नागन्तुमिह शक्यं तैरतीते समये हिनः २६
न मत्सकाशमागच्छेत्कृत्ये हि विनिपातिते
युवराजो महाबाहुः प्लवतां प्रवरोऽङ्गदः २७
यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः
भवेत्तु दीनवदनो भ्रान्तविप्लुतमानसः २८
पितृपैतामहं चैतत्पूर्वकैरभिरक्षितम्
न मे मधुवनं हन्यादहृष्टः प्लवगेश्वरः २९
कौसल्या सुप्रजा राम समाश्वसिहि सुव्रत
दृष्टा देवी न संदेहो न चान्येन हनूमता
न ह्यन्यः कर्मणो हेतुः साधने तद्विधो भवेत् ३०
हनूमति हि सिद्धिश्च मतिश्च मतिसत्तम
व्यवसायश्च वीर्यं च सूर्ये तेज इव ध्रुवम् ३१
जाम्बवान्यत्र नेता स्यादङ्गदश्च बलेश्वरः
हनूमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा ३२
मा भूश्चिन्तासमायुक्तः संप्रत्यमितविक्रम ३३
ततः किलकिलाशब्दं शुश्रावासन्नमम्बरे
हनूमत्कर्मदृप्तानां नर्दतां काननौकसाम्
किष्किन्धामुपयातानां सिद्धिं कथयतामिव ३४
ततः श्रुत्वा निनादं तं कपीनां कपिसत्तमः
आयताञ्चितलाङ्गूलः सोऽभवद्धृष्टमानसः ३५
आजग्मुस्तेऽपि हरयो रामदर्शनकाङ्क्षिणः
अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ३६
तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च मुदान्विताः
निपेतुर्हरिराजस्य समीपे राघवस्य च ३७

हनूमांश्च महाबाहुः प्रणम्य शिरसा ततः
नियतामक्षतां देवीं राघवाय न्यवेदयत् ३८
निश्चितार्थं ततस्तस्मिन्सुग्रीवं पवनात्मजे
लक्ष्मणः प्रीतिमान्प्रीतं बहुमानादवैक्षत ३९
प्रीत्या च रममाणोऽथ राघवः परवीरहा
बहुमानेन महता हनूमन्तमवैक्षत ४०
इति श्रीरामायणे सुन्दरकाण्डे द्विषष्टितमः सर्गः ६२

५-६३

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम्
प्रणम्य शिरसा रामं लक्ष्मणं च महाबलम् १
युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च
प्रवृत्तिमथ सीतायाः प्रवक्तुमुपचक्रमुः २
रावणान्तःपुरे रोधं राक्षसीभिश्च तर्जनम्
रामे समनुरागं च यश्चापि समयः कृतः ३
एतदाख्यान्ति ते सर्वे हरयो रामसंनिधौ
वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ४
क्व सीता वर्तते देवी कथं च मयि वर्तते
एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ५
रामस्य गदितं श्रुत्वा हरयो रामसंनिधौ
चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ६
श्रुत्वा तु वचनं तेषां हनूमान्मारुतात्मजः
उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा ७
समुद्रं लङ्घयित्वाहं शतयोजनमायतम्
अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया ८
तत्र लङ्केति नगरी रावणस्य दुरात्मनः
दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ९
तत्र दृष्टा मया सीता रावणान्तःपुरे सती
संन्यस्य त्वयि जीवन्ती रामा राम मनोरथम् १०
दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः

राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने ११
दुःखमापद्यते देवी तवादुःखोचिता सती
रावणान्तःपुरे रुद्ध्वा राक्षसीभिः सुरक्षिता १२
एकवेणीधरा दीना त्वयि चिन्तापरायणा
अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे १३
रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया
देवी कथंचित्काकुत्स्थ त्वन्मना मार्गिता मया १४
इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयतानघ
सा मया नरशार्दूल विश्वासमुपपादिता १५
ततः संभाषिता देवी सर्वमर्थं च दर्शिता
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता १६
नियतः समुदाचारो भक्तिश्चास्यास्तथा त्वयि
एवं मया महाभागा दृष्टा जनकनन्दिनी
उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ १७
अभिज्ञानं च मे दत्तं यथावृत्तं तवान्तिके
चित्रकूटे महाप्राज्ञ वायसं प्रति राघव १८
विज्ञाप्यश्च नरव्याघ्रो रामो वायुसुत त्वया
अखिलेनेह यद्दृष्टमिति मामाह जानकी १९
इदं चास्मै प्रदातव्यं यत्नात्सुपरिरक्षितम्
ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः २०
एष चूडामणिः श्रीमान्मया ते यत्नरक्षितः
मनःशिलायास्तिलकस्तं स्मरस्वेति चाब्रवीत् २१
एष निर्यातितः श्रीमान्मया ते वारिसंभवः
एतं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ २२
जीवितं धारयिष्यामि मासं दशरथात्मज
ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता २३
इति मामब्रवीत्सीता कृशाङ्गी धर्मचारिणी
रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना २४
एतदेव मयाख्यातं सर्वं राघव यद्यथा
सर्वथा सागरजले संतारः प्रविधीयताम् २५

तौ जाताश्वासौ राजपुत्रौ विदित्वा
तच्चाभिज्ञानं राघवाय प्रदाय
देव्या चाख्यातं सर्वमेवानुपूर्व्या
द्वाचा संपूर्णं वायुपुत्रः शशंस २६
इति श्रीरामायणे सुन्दरकाण्डे त्रिषष्टितमः सर्गः ६३

५-६४

एवमुक्तो हनुमता रामो दशरथात्मजः
तं मणिं हृदये कृत्वा प्ररुरोद सलक्ष्मणः १
तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः
नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् २
यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला
तथा ममापि हृदयं मणिरत्नस्य दर्शनात् ३
मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे
वधूकाले यथा वद्धमधिकं मूर्ध्नि शोभते ४
अयं हि जलसंभूतो मणिः प्रवरपूजितः
यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ५
इमं दृष्ट्वा मणिश्रेष्ठं तथा तातस्य दर्शनम्
अद्यास्म्यवगतः सौम्य वैदेहस्य तथा विभोः ६
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः
अद्यास्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ७
किमाह सीता वैदेही ब्रूहि सौम्य पुनः पुनः
परासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ८
इतस्तु किं दुःखतरं यदिमं वारिसंभवम्
मणिं पश्यामि सौमित्रे वैदेहीमागतं विना ९
चिरं जीवति वैदेही यदि मासं धरिष्यति
क्षणं सौम्य न जीवेयं विना तामसितेक्षणाम् १०
नय मामपि तं देशं यत्र दृष्टा मम प्रिया
न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ११
कथं सा मम सुश्रोणी भीरुभीरुः सती तदा

भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् १२
शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः
आवृतं वदनं तस्या न विराजति राक्षसैः १३
किमाह सीता हनुमंस्तत्त्वतः कथयस्व मे
एतेन खलु जीविष्ये भेषजेनातुरो यथा १४
मधुरा मधुरालापा किमाह मम भामिनी
मद्विहीना वरारोहा हनुमन्कथयस्व मे
दुःखाद्दुःखतरं प्राप्य कथं जीवति जानकी १५
इति श्रीरामायणे सुन्दरकाण्डे चतुःषष्टितमः सर्गः ६४

५-६५

एवमुक्तस्तु हनुमान्राघवेण महात्मना
सीताया भाषितं सर्वं न्यवेदयत राघवे १
इदमुक्तवती देवी जानकी पुरुषर्षभ
पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् २
सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता
वायसः सहसोत्पत्य विरराद स्तनान्तरे ३
पर्यायेण च सुप्तस्त्वं देव्यङ्के भरताग्रज
पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ४
ततः पुनरुपागम्य विरराद भृशं किल
ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः५
वायसेन च तेनैव सततं बाध्यमानया
बोधितः किल देव्या त्वं सुखसुप्तः परंतप ६
तां तु दृष्ट्वा महाबाहो रादितां च स्तनान्तरे
आशीविष इव क्रुद्धो निःश्वसन्नभ्यभाषथाः ७
नखाग्रैः केन ते भीरु दारितं तु स्तनान्तरम्
कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ८
निरीक्षमाणः सहसा वायसं समवैक्षथाः
नखैः सरुधिरैस्तीक्ष्णैर्मामेवाभिमुखं स्थितम् ९
सुतः किल स शक्रस्य वायसः पततां वरः

धरान्तरचरः शीघ्रं पवनस्य गतौ समः १०
ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः
वायसे त्वं कृथाः क्रूरां मतिं मतिमतां वर ११
स दर्भं संस्तराद्गृह्य ब्रह्मास्त्रेण न्ययोजयः
स दीप्त इव कालाग्निर्जज्वालाभिमुखः खगम् १२
स त्वं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति
ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम ह १३
स पित्रा च परित्यक्तः सुरैः सर्वैर्महर्षिभिः
त्रीँल्लोकान्संपरिक्रम्य त्रातारं नाधिगच्छति १४
तं त्वं निपतितं भूमौ शरण्यः शरणागतम्
वधार्हमपि काकुत्स्थ कृपया परिपालयः १५
मोघमस्त्रं नं शक्यं तु कर्तुमित्येव राघव
ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् १६
राम त्वां स नमस्कृत्वा राज्ञो दशरथस्य च
विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् १७
एवमस्त्रविदां श्रेष्ठः सत्त्ववाञ्शीलवानपि
किमर्थमस्त्रं रक्षःसु न योजयसि राघव १८
न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः
तव राम मुखे स्थातुं शक्ताः प्रतिसमाधितुम् १९
तव वीर्यवतः कच्चिन्मयि यद्यस्ति संभ्रमः
क्षिप्रं सुनिशितैर्बाणैर्हन्यतां युधि रावणः २०
भ्रातुरादेशमादाय लक्ष्मणो वा परंतपः
स किमर्थं नरवरो न मां रक्षति राघवः २१
शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ
सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः २२
ममैव दुष्कृतं किंचिन्महदस्ति न संशयः
समर्थौ सहितौ यन्मां नापे ८क्षेते परंतपौ २३
वैदेह्या वचनं श्रुत्वा करुणं साश्रु भाषितम्
पुनरप्यहमार्यां तामिदं वचनमब्रुवम् २४
त्वच्छोकविमुखो रामो देवि सत्येन ते शपे

रामे दुःखाभिभूते चिउि लन्दमणः परितप्यते २५
कथंचिद्भवती दृष्टा न कालः परिशोचितुम्
इमं मुहूर्तं दुःखानामन्तं द्रन्दयसि भामिनि २६
तावुभौ नरशार्दूलौ राजपुत्रावरिंदमौ
त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः २७
हत्वा च समरे रौद्रं रावणं सहबान्धवम्
राघवस्त्वां महाबाहुः स्वां पुरीं नयते ध्रुवम् २८
यत्तु रामो विजानीयादभिज्ञानमनिन्दिते
प्रीतिसंजननं तस्य प्रदातुं तत्त्वमर्हसि २९
साभिवीन्दय दिशः सर्वा वेरायुद्ग्रथनमुत्तमम्
मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल ३०
प्रतिगृह्य मणिं दिव्यं तव हेतो रघूत्तम
शिरसा संप्रणम्यैनामहमागमने त्वरे ३१
गमने च कृतोत्साहमवेन्दय वरवर्णिनी
विवर्धमानं च हि मामुवाच जनकात्मजा
अश्रुपूर्णमुखी दीना वाष्पसंदिग्धभाषिणी ३२
हनुमन्सिंहसंकाशौ तावुभौ रामलन्दमणौ
सुग्रीवं च सहामात्यं सर्वान्ब्रूया अनामयम् ३३
यथा च स महाबाहुर्मां तारयति राघवः
अस्माद्दुःखाम्बुसंरोधात्तत्समाधातुमर्हसि ३४
इमं च तीव्रं मम शोकवेगं
रन्दोभिरेभिः परिभर्त्सनं च
ब्रूयास्तु रामस्य गतः समीपं
शिवश्च तेऽध्वास्तु हरिप्रवीर ३५
एतत्तवार्या नृप राजसिंह
सीता वचः प्राह विषादपूर्वम्
एतच्च बुद्ध्वा गदितं मया त्वं
श्रद्धत्स्व सीतां कुशलां समग्राम् ३६
इति श्रीरामायणे सुन्दरकाराडे पञ्चषष्टितमः सर्गः ६५

५-६६
अथाहमुत्तरं देव्या पुनरुक्तः ससंभ्रमम्
तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य च १
एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया
यथा मामाप्नुयाच्छीघ्रं हत्वा रावणमाहवे २
यदि वा मन्यसे वीर वसैकाहमरिंदम
कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ३
मम चाप्यल्पभाग्यायाः सांनिध्यात्तव वानर
अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ४
गते हि त्वयि विक्रान्ते पुनरागमनाय वै
प्राणानामपि संदेहो ममस्यान्नात्र संशयः ५
तवादर्शनजः शोको भूयो मां परितापयेत्
दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ६
अयं तु वीर संदेहस्तिष्ठतीव ममाग्रतः
सुमहांस्त्वत्सहायेषु हर्यृक्षेषु असंशयः ७
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम्
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ८
त्रयाणामेव भूतानां सागरस्यास्य लङ्घने
शक्तिः स्याद्वैनतेयस्य वायोर्वा तव वानघ ९
तदस्मिन्कार्यनिर्योगे वीरैवं दुरतिक्रमे
किं पश्यसि समाधानं ब्रूहि कार्यविदां वर १०
काममस्य त्वमेवैकः कार्यस्य परिसाधने
पर्याप्तं परवीरघ्न यशस्यस्ते बलोदयः ११
बलैः समग्रैर्यदि मां हत्वा रावणमाहवे
विजयी स्वां पुरीं रामो नयेत्तत्स्याद्यशस्करम् १२
यथाहं तस्य वीरस्य वनादुपधिना हृता
रक्षसा तद्भयादेव तथा नार्हति राघवः १३
बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् १४
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः

भवत्याहवशूरस्य तथा त्वमुपपादय १५
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम्
निशम्याहं ततः शेषं वाक्यमुत्तरमब्रुवम् १६
देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः
सुग्रीवः सत्त्वसम्पन्नस्तवार्थे कृतनिश्चयः १७
तस्य विक्रमसम्पन्नाः सत्त्ववन्तो महाबलाः
मनःसंकल्पसंपाता निदेशे हरयः स्थिताः १८
येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः
न च कमर्सु सीदन्ति महत्स्वमिततेजसः १९
असकृत्तैर्महाभागैर्वानरैर्बलसंयुतैः
प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः २०
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ २१
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः २२
तदलं परितापेन देवि मन्युर्व्यपैतु ते
एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः २३
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ
त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः २४
अरिघ्नं सिंहसंकाशं क्षिप्रं द्रक्ष्यसि राघवम्
लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् २५
नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान्
वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् २६
शैलाम्बुदनिकाशानां लङ्कामलयसानुषु
नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसे स्वनम् २७
निवृत्तवनवासं च त्वया सार्धमरिंदमम्
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् २८
ततो मया वाग्भिरदीनभाषिणी
शिवाभिरिष्टाभिरभिप्रसादिता
जगाम शान्तिं मम मैथिलात्मजा

तवापि शोकेन तथाभिपीडिता २९

इति श्रीरामायणे सुन्दरकाण्डे षट्षष्टितमः सर्गः ६६

समाप्तं सुन्दरकाण्डम्

Sundara Kānda: Typed by Rajesh Yadev, B.A., and proofread by Murali Dhar Pandey (Ph.D.).

६-१

श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम्
रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् १
कृतं हनुमता कार्यं सुमहद्भुवि दुष्करम्
मनसापि यदन्येन न शक्यं धरणीतले २
न हि तं परिपश्यामि यस्तरेत महार्णवम्
अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ३
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम्
अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम् ४
प्रविष्टः सत्त्वमाश्रित्य जीवन्को नाम निष्क्रमेत्
को विशेत्सुदुराधर्षां राक्षसैश्च सुरक्षिताम्
यो वीर्यबलसम्पन्नो न समः स्याद्धनूमतः ५
भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत्
एवं विधाय स्वबलं सदृशं विक्रमस्य च ६
यो हि भृत्यो नियुक्तः सन्भर्त्रा कर्मणि दुष्करे
कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ७
नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः
भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ८
तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता
न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ९
अहं च रघुवंशश्च लक्ष्मणश्च महाबलः
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः १०
इदं तु मम दीनस्य मनो भूयः प्रकर्षति
यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ११
एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः
मया कालमिमं प्राप्य दत्तस्तस्य महात्मनः १२
सर्वथा सुकृतं तावत्सीतायाः परिमार्गणम्
सागरं तु समासाद्य पुनर्नष्टं मनो मम १३
कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः
हरयो दक्षिणं पारं गमिष्यन्ति समाहिताः १४

यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम
समुद्रपारगमने हरीणां किमिवोत्तरम् १५
इत्युक्त्वा शोकसंभ्रान्तो रामः शत्रुनिबर्हणः
हनूमन्तं महाबाहुस्ततो ध्यानमुपागमत् १६
इति श्रीरामायणे युद्धकाण्डे प्रथमः सर्गः १

६-२

तं तु शोकपरिद्यूनं रामं दशरथात्मजम्
उवाच वचनं श्रीमान्सुग्रीवः शोकनाशनम् १
किं त्वं संतप्यसे वीर यथान्यः प्राकृतस्तथा
मैवं भूस्त्यज संतापं कृतघ्न इव सौहृदम् २
संतापस्य च ते स्थानं न हि पश्यामि राघव
प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ३
धृतिमाञ्शास्त्रवित्प्राज्ञः पण्डितश्चासि राघव
त्यजेमां पापिकां बुद्धिं कृतात्मेवार्थदूषणीम् ४
समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम्
लङ्कामारोहयिष्यामो हनिष्यामश्च ते रिपुम् ५
निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः
सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ६
इमे शूराः समर्थाश्च सर्वे नो हरियूथपाः
त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ७
एषां हर्षेण जानामि तर्कश्चास्मिन्दृढो मम
विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् ८
सेतुरत्र यथा बध्येद्यथा पश्येम तां पुरीम्
तस्य राक्षसराजस्य तथा त्वं कुरु राघव ९
दृष्ट्वा तां हि पुरीं लङ्कां त्रिकूटशिखरे स्थिताम्
हतं च रावणं युद्धे दर्शनादुपधारय १०
सेतुर्बद्धः समुद्रे च यावल्लङ्कासमीपतः
सर्वं तीर्णं च वै सैन्यं जितमित्युपधार्यताम् ११
इमे हि समरे शूरा हरयः कामरूपिणः

तदलं विक्लवा बुद्धी राजन्सर्वार्थनाशिनी १२
पुरुषस्य हि लोकेऽस्मिञ्शोकः शौर्यापकर्षणः
यत्तु कार्यं मनुष्येण शौराडीर्यमवलम्बता १३
शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम्
विनष्टे वा प्रनष्टे वा शोकः सर्वार्थनाशनः १४
त्वं तु बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः
मद्विधैः सचिवैः सार्धमरिं जेतुमिहार्हसि १५
न हि पश्याम्यहं कंचित्त्रिषु लोकेषु राघव
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे १६
वानरेषु समासक्तं न ते कार्यं विपत्स्यते
अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् १७
तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते
निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चराडस्य बिभ्यति १८
लङ्घनार्थं च घोरस्य समुद्रस्य नदीपतेः
सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय १९
इमे हि समरे शूरा हरयः कामरूपिणः
तानरीन्विधमिष्यन्ति शिलापादपवृष्टिभिः २०
कथंचित्परिपश्यामस्ते वयं वरुणालयम्
किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् २१
इति श्रीरामायणे युद्धकाराडे द्वितीयः सर्गः २

६-३

सुग्रीवस्य वचः श्रुत्वा हेतुमत्परमार्थवित्
प्रतिजग्राह काकुत्स्थो हनूमन्तमथाब्रवीत् १
तरसा सेतुबन्धेन सागरोच्छोषणेन वा
सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लङ्घने २
कति दुर्गाणि दुर्गाया लङ्कायास्तद्ब्रवीहि मे
ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ३
बलस्य परिमाणं च द्वारदुर्गक्रियामपि
गुप्तिकर्म च लङ्काया रक्षसां सदनानि च ४

यथासुखं यथावच्च लङ्कायामसि दृष्टवान्
सर्वमाचद्दव तत्त्वेन सर्वथा कुशलो ह्यसि ५
श्रुत्वा रामस्य वचनं हनूमान्मारुतात्मजः
वाक्यं वाक्यविदां श्रेष्ठो रामं पुनरथाब्रवीत् ६
श्रूयतां सर्वमाख्यास्ये दुर्गकर्मविधानतः
गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः ७
परां समृद्धिं लङ्कायाः सागरस्य च भीमताम्
विभागं च बलौघस्य निर्देशं वाहनस्य च ८
प्रहृष्टा मुदिता लङ्का मत्तद्विपसमाकुला
महती रथसंपूर्णा रक्षोगणसमाकुला ९
दृढबद्धकवाटानि महापरिघवन्ति च
द्वाराणि विपुलान्यस्याश्चत्वारि सुमहान्ति च १०
वप्रेषूपलयन्त्राणि बलवन्ति महान्ति च
आगतं परसैन्यं तैस्तत्र प्रतिनिवार्यते ११
द्वारेषु संस्कृता भीमाः कालायसमयाः शिताः
शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः १२
सौवर्णश्च महांस्तस्याः प्राकारो दुष्प्रधर्षणः
मणिविद्रुमवैदूर्यमुक्ताविरचितान्तरः १३
सर्वतश्च महाभीमाः शीततोया महाशुभाः
अगाधा ग्राहवत्यश्च परिखा मीनसेविताः १४
द्वारेषु तासां चत्वारः संक्रमाः परमायताः
यन्त्रैरुपेता बहुभिर्महद्भिर्दृढसंधिभिः १५
त्रायन्ते संक्रमास्तत्र परसैन्यागमे सति
यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः १६
एकस्त्वकम्प्यो बलवान्संक्रमः सुमहादृढः
काञ्चनैर्बहुभिः स्तम्भैर्वेदिकाभिश्च शोभितः १७
स्वयं प्रकृतिसम्पन्नो युयुत्सू राम रावणः
उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने १८
लङ्कापुरी निरालम्बा देवदुर्गा भयावहा
नादेयं पार्वतं वन्यं कृत्रिमं च चतुर्विधम् १९

स्थिता पारे समुद्रस्य दूरपारस्य राघव
नौपथश्चापि नास्त्यत्र निरादेशश्च सर्वतः २०
शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा
वाजिवारणसंपूर्णा लङ्का परमदुर्जया २१
परिघाश्च शतघ्न्यश्च यन्त्राणि विविधानि च
शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः २२
अयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम्
शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः २३
नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम्
चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः २४
प्रयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम्
चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः २५
अर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम्
रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः २६
शतं शतसहस्राणां मध्यमं गुल्ममाश्रितम्
यातुधाना दुराधर्षाः साग्रकोटिश्च रक्षसाम् २७
ते मया संक्रमा भग्नाः परिखाश्चावपूरिताः
दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः २८
येन केन तु मार्गेण तराम वरुणालयम्
हतेति नगरी लङ्का वानरैरवधार्यताम् २९
अङ्गदो द्विविदो मैन्दो जाम्बवान्पनसो नलः
नीलः सेनापतिश्चैव बलशेषेण किं तव ३०
प्लवमाना हि गत्वा तां रावणस्य महापुरीम्
सप्राकारां सभवनामानयिष्यन्ति मैथिलीम् ३१
एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम्
मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ३२
इति श्रीरामायणे युद्धकाण्डे तृतीयः सर्गः ३

६-४

श्रुत्वा हनूमतो वाक्यं यथावदनुपूर्वशः

ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः १
यां निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः
क्षिप्रमेनां वधिष्यामि सत्यमेतद्ब्रवीमि ते २
अस्मिन्मुहूर्ते सुग्रीव प्रयाणमभिरोचये
युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः ३
उत्तराफाल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते
अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ४
निमित्तानि च धन्यानि यानि प्रादुर्भवन्ति मे
निहत्य रावणं सीतामानयिष्यामि जानकीम् ५
उपरिष्टाद्धि नयनं स्फुरमाणमिदं मम
विजयं समनुप्राप्तं शंसतीव मनोरथम् ६
अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम्
वृतः शतसहस्रेण वानराणां तरस्विनाम् ७
फलमूलवता नील शीतकाननवारिणा
पथा मधुमता चाशु सेनां सेनापते नय ८
दूषयेयुर्दुरात्मानः पथि मूलफलोदकम्
राक्षसाः परिरक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः ९
निम्नेषु वनदुर्गेषु वनेषु च वनौकसः
अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम् १०
सागरौघनिभं भीममग्रानीकं महाबलाः
कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ११
गजश्च गिरिसंकाशो गवयश्च महाबलः
गवाक्षश्चाग्रतो यान्तु गवां दृप्ता इवर्षभाः १२
यातु वानरवाहिन्या वानरः प्लवतां पतिः
पालयन्दक्षिणं पार्श्वमृषभो वानरर्षभः १३
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः
यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः १४
यास्यामि बलमध्येऽहं बलौघमभिहर्षयन्
अधिरुह्य हनूमन्तमैरावतमिवेश्वरः १५
अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः

सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा १६
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः
ऋक्षराजो महासत्त्वः कुक्षिं रक्षन्तु ते त्रयः १७
राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः
व्यादिदेश महावीर्यान्वानरान्वानरर्षभः १८
ते वानरगणाः सर्वे समुत्पत्य युयुत्सवः
गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा १९
ततो वानरराजेन लक्ष्मणेन च पूजितः
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् २०
शतैः शतसहस्रैश्च कोटीभिरयुतैरपि
वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा २१
तं यान्तमनुयाति स्म महती हरिवाहिनी २२
हृष्टा प्रमुदिताः सर्वे सुग्रीवेणाभिपालिताः
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवंगमाः
क्ष्वेलन्तो निनदन्तश्च जग्मुर्वै दक्षिणां दिशम् २३
भक्षयन्तः सुगन्धीनि मधूनि च फलानि च
उद्वहन्तो महावृक्षान्मञ्जरीपुञ्जधारिणः २४
अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च
पतन्तश्चोत्पतन्त्यन्ये पातयन्त्यपरे परान् २५
रावणो नो निहन्तव्यः सर्वे च रजनीचराः
इति गर्जन्ति हरयो राघवस्य समीपतः २६
पुरस्तादृषभो वीरो नीलः कुमुद एव च
पन्थानं शोधयन्ति स्म वानरैर्बहुभिः सह २७
मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च
बहुभिर्बलिभिर्भीमैर्वृताः शत्रुनिबर्हणाः २८
हरिः शतबलिर्वीरः कोटीभिर्दशभिर्वृतः
सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् २९
कोटीशतपरीवारः केसरी पनसो गजः
अर्कश्चातिबलः पार्श्वमेकं तस्याभिरक्षति ३०
सुषेणो जाम्बवांश्चैव ऋक्षैर्बहुभिरावृतः

सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुः ३१
तेषां सेनापतिर्वीरो नीलो वानरपुंगवः
संपतन्पततां श्रेष्ठस्तद्बलं पर्यपालयत् ३२
दरीमुखः प्रजङ्घश्च जम्भोऽथ रभसः कपिः
सर्वतश्च ययुर्वीरास्त्वरयन्तः प्लवंगमान् ३३
एवं ते हरिशार्दूला गच्छन्तो बलदर्पिताः
अपश्यंस्ते गिरिश्रेष्ठं सह्यं द्रुमलतायुतम् ३४
सागरौघनिभं भीमं तद्वानरबलं महत्
निःससर्प महाघोषं भीमवेग इवार्णवः ३५
तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः
तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः ३६
कपिभ्यामुह्यमानौ तौ शुशुभाते नरर्षभौ
महद्भ्यामिव संस्पृष्टौ ग्राहाभ्यां चन्द्रभास्करौ ३७
तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा
उवाच प्रतिपूर्णार्थः स्मृतिमान्प्रतिभानवान् ३८
हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम्
समृद्धार्थः समृद्धार्थामयोध्यां प्रतियास्यसि ३९
महान्ति च निमित्तानि दिवि भूमौ च राघव
शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ४०
अनु वाति शुभो वायुः सेनां मृदुहितः सुखः
पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः ४१
प्रसन्नाश्च दिशः सर्वा विमलश्च दिवाकरः
उशना च प्रसन्नार्चिरनु त्वां भार्गवो गतः ४२
ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः
अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ४३
त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः
पितामहवरोऽस्माकमिक्ष्वाकूणां महात्मनाम् ४४
विमले च प्रकाशेते विशाखे निरुपद्रवे
नक्षत्रं परमस्माकमिक्ष्वाकूणां महात्मनाम् ४५
नैर्ऋतं नैर्ऋतानां च नक्षत्रमभिपीड्यते

मूलं मूलवता स्पृष्टं धूप्यते धूमकेतुना ४६
सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम्
काले कालगृहीतानां नक्षत्रं ग्रहपीडितम् ४७
प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च
प्रवान्त्यभ्यधिकं गन्धा यथर्तुकुसुमा द्रुमाः ४८
व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो
देवानामिव सैन्यानि संग्रामे तारकामये ४९
एवमार्य समीक्ष्यैतान्प्रीतो भवितुमर्हसि
इति भ्रातरमाश्वास्य हृष्टः सौमित्रिरब्रवीत् ५०
अथावृत्य महीं कृत्स्नां जगाम महती चमूः
ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैर्वृता ५१
कराग्रैश्चरणाग्रैश्च वानरैरुद्धतं रजः
भौममन्तर्दधे लोकं निवार्य सवितुः प्रभाम् ५२
सा स्म याति दिवारात्रं महती हरिवाहिनी
हृष्टप्रमुदिता सेना सुग्रीवेणाभिरक्षिता ५३
वानरास्त्वरितं यान्ति सर्वे युद्धाभिनन्दिनः
मुमोक्षयिषवः सीतां मुहूर्तं क्वापि नासत ५४
ततः पादपसंबाधं नानामृगसमायुतम्
सह्यपर्वतमासेदुर्मलयं च महीधरम् ५५
काननानि विचित्राणि नदीप्रस्रवणानि च
पश्यन्नति ययौ रामः सह्यस्य मलयस्य च ५६
चम्पकांस्तिलकांश्चूतानशोकान्सिन्दुवारकान्
करवीरांश्च तिमिशान्भञ्जन्ति स्म प्लवंगमाः ५७
फलान्यमृतगन्धीनि मूलानि कुसुमानि च
बुभुजुर्वानरास्तत्र पादपानां बलोत्कटाः ५८
द्रोणमात्रप्रमाणानि लम्बमानानि वानराः
ययुः पिबन्तो हृष्टास्ते मधूनि मधुपिङ्गलाः ५९
पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः
विधमन्तो गिरिवरान्प्रययुः प्लवगर्षभाः ६०
वृक्षेभ्योऽन्ये तु कपयो नर्दन्तो मधुदर्पिताः

अन्ये वृक्षान्प्रपद्यन्ते प्रपतन्त्यपि चापरे ६१
बभूव वसुधा तैस्तु संपूर्णा हरिपुंगवैः
यथा कलमकेदारैः पक्वैरिव वसुंधरा ६२
महेन्द्रमथ संप्राप्य रामो राजीवलोचनः
अध्यारोहन्महाबाहुः शिखरं द्रुमभूषितम् ६३
ततः शिखरमारुह्य रामो दशरथात्मजः
कूर्ममीनसमाकीर्णमपश्यत्सलिलाशयम् ६४
ते सह्यं समतिक्रम्य मलयं च महागिरिम्
आसेदुरानुपूर्व्येण समुद्रं भीमनिःस्वनम् ६५
अवरुह्य जगामाशु वेलावनमनुत्तमम्
रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ६६
अथ धौतोपलतलां तोयौघैः सहसोत्थितैः
वेलामासाद्य विपुलां रामो वचनमब्रवीत् ६७
एते वयमनुप्राप्ताः सुग्रीव वरुणालयम्
इहेदानीं विचिन्ता सा या न पूर्वं समुत्थिता ६८
अतः परमतीरोऽय सागरः सरितां पतिः
न चायमनुपायेन शक्यस्तरितुमर्णवः ६९
तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिह
यथेदं वानरबलं परं पारमवाप्नुयात् ७०
इतीव स महाबाहुः सीताहरणकर्शितः
रामः सागरमासाद्य वासमाज्ञापयत्तदा ७१
संप्राप्तो मन्त्रकालो नः सागरस्येह लङ्घने
स्वां स्वां सेनां समुत्सृज्य मा च कश्चित्कुतो व्रजेत्
गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयं च नः ७२
रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः
सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ७३
विरराज समीपस्थं सागरस्य तु तद्बलम्
मधुपाण्डुजलः श्रीमान्द्वितीय इव सागरः ७४
वेलावनमुपागम्य ततस्ते हरिपुंगवाः
विनिविष्टाः परं पारं काङ्क्षमाणा महोदधेः ७५

सा महार्णवमासाद्य हृष्टा वानरवाहिनी
वायुवेगसमाधूतं पश्यमाना महार्णवम् ७६
दूरपारमसंबाधं रक्षोगणनिषेवितम्
पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ७७
चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये
चन्द्रोदये समाधूतं प्रतिचन्द्रसमाकुलम् ७८
चण्डानिलमहाग्राहैः कीर्णं तिमितिमिंगिलैः
दीप्तभोगैरिवाकीर्णं भुजंगैर्वरुणालयम् ७९
अवगाढं महासत्त्वैर्नानाशैलसमाकुलम्
दुर्गं दुर्गममार्गं तमगाधमसुरालयम् ८०
मकरैर्नागभोगैश्च विगाढा वातलोलिताः
उत्पेतुश्च निपेतुश्च प्रवृद्धा जलराशयः ८१
अग्निचूर्णमिवाविद्धं भास्वराम्बुमहोरगम्
सुरारिविषयं घोरं पातालविषमं सदा ८२
सागरं चाम्बरप्रख्यमम्बरं सागरोपमम्
सागरं चाम्बरं चेति निर्विशेषमदृश्यत ८३
संपृक्तं नभसा ह्यम्भः संपृक्तं च नभोऽम्भसा
तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ८४
समुत्पतितमेघस्य वीचिमालाकुलस्य च
विशेषो न द्वयोरासीत्सागरस्याम्बरस्य च ८५
अन्योन्यैराहताः सक्ताः सस्वनुर्भीमनिःस्वनाः
ऊर्मयः सिन्धुराजस्य महाभेर्य इवाहवे ८६
रत्नौघजलसंनादं विषक्तमिव वायुना
उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ८७
ददृशुस्ते महात्मानो वाताहतजलाशयम्
अनिलोद्धूतमाकाशे प्रवल्गन्तमिवोर्मिभिः
भ्रान्तोर्मिजलसंनादं प्रलोलमिव सागरम् ८८

इति श्रीरामायणे युद्धकाण्डे चतुर्थः सर्गः ४

६-५

सा तु नीलेन विधिवत्स्वारक्षा सुसमाहिता
सागरस्योत्तरे तीरे साधु सेना निवेशिता १
मैन्दश्च द्विविदश्चोभौ तत्र वानरपुंगवौ
विचेरतुश्च तां सेनां रक्षार्थं सर्वतोदिशम् २
निविष्टायां तु सेनायां तीरे नदनदीपतेः
पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ३
शोकश्च किल कालेन गच्छता ह्यपगच्छति
मम चापश्यतः कान्तामहन्यहनि वर्धते ४
न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति च
एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ५
वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश
त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ६
तन्मे दहति गात्राणि विषं पीतमिवाशये
हा नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत् ७
तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा
रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ८
अवगाह्यार्णवं स्वप्स्ये सौमित्रे भवता विना
कथंचित्प्रज्वलन्कामः समा सुप्तं जले दहेत् ९
बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम्
यदहं सा च वामोरूरेकां धरणिमाश्रितौ १०
केदारस्येव केदारः सोदकस्य निरूदकः
उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ११
कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम्
विजित्य शत्रून्द्रक्ष्यामि सीतां स्फीतामिव श्रियम् १२
कदा नु चारुबिम्बोष्ठं तस्याः पद्ममिवाननम्
ईषदुन्नम्य पास्यामि रसायनमिवातुरः १३
तौ तस्याः संहतौ पीनौ स्तनौ तालफलोपमौ
कदा नु खलु सोत्कम्पौ हसन्त्या मां भजिष्यतः १४
सा नूनमसितापाङ्गी रक्षोमध्यगता सती

मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति १५
कदा विक्षोभ्य रक्षांसि सा विधूयोत्पतिष्यति
विधूय जलदान्नीलाञ्शशिलेखा शरत्स्विव १६
स्वभावतनुका नूनं शोकेनानशनेन च
भूयस्तनुतरा सीता देशकालविपर्ययात् १७
कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान्
सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् १८
कदा नु खलु मां साध्वी सीतामरसुतोपमा
सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं जलम् १९
कदा शोकमिमं घोरं मैथिलीविप्रयोगजम्
सहसा विप्रमोक्ष्यामि वासः शुक्लेतरं यथा २०
एवं विलपतस्तस्य तत्र रामस्य धीमतः
दिनक्षयान्मन्दवपुर्भास्करोऽस्तमुपागमत् २१
आश्वासितो लक्ष्मणेन रामः संध्यामुपासत
स्मरन्कमलपत्राक्षीं सीतां शोकाकुलीकृतः २२
इति श्रीरामायणे युद्धकाण्डे पञ्चमः सर्गः ४

६-६

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम्
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना
अब्रवीद्राक्षसान्सर्वान्ह्रिया किंचिदवाङ्मुखः १
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी
तेन वानरमात्रेण दृष्टा सीता च जानकी २
प्रासादो धर्षितश्चैत्यः प्रवरा राक्षसा हताः
आविला च पुरी लङ्का सर्वा हनुमता कृता ३
किं करिष्यामि भद्रं वः किं वा युक्तमनन्तरम्
उच्यतां नः समर्थं यत्कृतं च सुकृतं भवेत् ४
मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः
तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ५
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः

तेषां तु समवेतानां गुणदोषं वदाम्यहम् ६
मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये
मित्रैर्वापि समानार्थैर्बान्धवैरपि वा हितैः ७
सहितो मन्त्रयित्वा यः कर्मारम्भान्प्रवर्तयेत्
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ८
एकोऽथ विमृशेदेको धर्मे प्रकुरुते मनः
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ९
गुणदोषावनिश्चित्य त्यक्त्वा दैवव्यपाश्रयम्
करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः १०
यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः
एवं मन्त्रोऽपि विज्ञेय उत्तमाधममध्यमः ११
एकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा
मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् १२
बह्व्योऽपि मतयो गत्वा मन्त्रिणो ह्यर्थनिर्णये
पुनर्यत्रैकतां प्राप्तः स मन्त्रो मध्यमः स्मृतः १३
अन्योन्यमतिमास्थाय यत्र संप्रतिभाष्यते
न चैकमत्ये श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते १४
तस्मात्सुमन्त्रितं साधु भवन्तो मन्त्रिसत्तमाः
कार्यं संप्रतिपद्यन्तामेतत्कृत्यतमं मम १५
वानराणां हि वीराणां सहस्रैः परिवारितः
रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः १६
तरिष्यति च सुव्यक्तं राघवः सागरं सुखम्
तरसा युक्तरूपेण सानुजः सबलानुगः १७
अस्मिन्नेवंगते कार्ये विरुद्धे वानरैः सह
हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम १८

इति श्रीरामायणे युद्धकाण्डे षष्ठः सर्गः ६

६-७

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः
ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् १

राजन्परिघशक्त्यृष्टिशूलपट्टससंकुलम्
सुमहन्नो बलं कस्माद्विषादं भजते भवान् २
कैलासशिखरावासी यद्गैर्बहुभिरावृतः
सुमहत्कदनं कृत्वा वश्यस्ते धनदः कृतः ३
स महेश्वरसख्येन श्लाघमानस्त्वया विभो
निर्जितः समरे रोषाल्लोकपालो महाबलः ४
विनिहत्य च यद्गौघान्विद्गोभ्य च विगृह्य च
त्वया कैलासशिखराद्विमानमिदमाहृतम् ५
मयेन दानवेन्द्रेण त्वद्भयात्सख्यमिच्छता
दुहिता तव भार्यार्थे दत्ता राद्गसपुंगव ६
दानवेन्द्रो मधुर्नाम वीर्योत्सिक्तो दुरासदः
विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः ७
निर्जितास्ते महाबाहो नागा गत्वा रसातलम्
वासुकिस्तद्गकः शङ्खो जटी च वशमाहृताः ८
अद्गया बलवन्तश्च शूरा लब्धवराः पुनः
त्वया संवत्सरं युद्ध्वा समरे दानवा विभो ९
स्वबलं समुपाश्रित्य नीता वशमरिंदम
मायाश्चाधिगतास्तत्र बहवो राद्गसाधिप १०
शूराश्च बलवन्तश्च वरुणस्य सुता रणे
निर्जितास्ते महाबाहो चतुर्विधबलानुगाः ११
मृत्युदराडमहाग्राहं शाल्मलिद्वीपमरिडतम्
अवगाह्य त्वया राजन्यमस्य बलसागरम् १२
जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः
सुयुद्धेन च ते सर्वे लोकास्तत्र सुतोषिताः १३
द्गत्रियैर्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः
आसीद्वसुमती पूर्णा महद्भिरिव पादपैः १४
तेषां वीर्यगुणोत्साहैर्न समो राघवो रणे
प्रसह्य ते त्वया राजन्हता परमदुर्जयाः १५
राजन्नापदयुक्तेयमागता प्राकृताज्जनात्
हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम् १६

इति श्रीरामायणे युद्धकाण्डे सप्तमः सर्गः ७

६-८

ततो नीलाम्बुदनिभः प्रहस्तो नाम राक्षसः
अब्रवीत्प्राञ्जलिर्वाक्यं शूरः सेनापतिस्तदा १
देवदानवगन्धर्वाः पिशाचपतगोरगाः
न त्वां धर्षयितुं शक्ताः किं पुनर्वानरा रणे २
सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता
न हि मे जीवतो गच्छेज्जीवन्स वनगोचरः ३
सर्वां सागरपर्यन्तां सशैलवनकाननाम्
करोम्यवानरां भूमिमाज्ञापयतु मां भवान् ४
रक्षां चैव विधास्यामि वानराद्रजनीचर
नागमिष्यति ते दुःखं किंचिदात्मापराधजम् ५
अब्रवीच्च सुसंक्रुद्धो दुर्मुखो नाम राक्षसः
इदं न क्षमणीयं हि सर्वेषां नः प्रधर्षणम् ६
अयं परिभवो भूयः पुरस्यान्तःपुरस्य च
श्रीमतो राक्षसेन्द्रस्य वानरेन्द्रप्रधर्षणम् ७
अस्मिन्मुहूर्ते हत्वैको निवर्तिष्यामि वानरान्
प्रविष्टान्सागरं भीममम्बरं वा रसातलम् ८
ततोऽब्रवीत्सुसंक्रुद्धो वज्रदंष्ट्रो महाबलः
प्रगृह्य परिघं घोरं मांसशोणितरूषितम् ९
किं वो हनुमता कार्यं कृपणेन तपस्विना
रामे तिष्ठति दुर्धर्षे सुग्रीवे सहलक्ष्मणे १०
अद्य रामं ससुग्रीवं परिघेण सलक्ष्मणम्
आगमिष्यामि हत्वैको विक्षोभ्य हरिवाहिनीम् ११
कौम्भकर्णिस्ततो वीरो निकुम्भो नाम वीर्यवान्
अब्रवीत्परमक्रुद्धो रावणं लोकरावणम् १२
सर्वे भवन्तस्तिष्ठन्तु महाराजेन संगताः
अहमेको हनिष्यामि राघवं सहलक्ष्मणम् १३
ततो वज्रहनुर्नाम राक्षसः पर्वतोपमः

क्रुद्धः परिलिहन्वक्त्रं जिह्वया वाक्यमब्रवीत् १४
स्वैरं कुर्वन्तु कार्याणि भवन्तो विगतज्वराः
एकोऽह भक्षयिष्यामि तान्सर्वान्हरियूथपान् १५
स्वस्थाः क्रीडन्तु निश्चिन्ताः पिबन्तु मधुवारुणीम्
अहमेको हनिष्यामि सुग्रीवं सहलक्ष्मणम्
साङ्गदं च हनूमन्तं रामं च रणकुञ्जरम् १६
इति श्रीरामायणे युद्धकाराडे अष्टमः सर्गः ८

६-९

ततो निकुम्भो रभसः सूर्यशत्रुर्महाबलः
सुप्तघ्नो यज्ञकोपश्च महापार्श्वो महोदरः १
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः
इन्द्रजिच्च महातेजा बलवान्रावणात्मजः २
प्रहस्तोऽथ विरूपाक्षो वज्रदंष्ट्रो महाबलः
धूम्राक्षश्चातिकायश्च दुर्मुखश्चैव राक्षसः ३
परिघान्पट्टसान्प्रासाञ्शक्तिशूलपरश्वधान्
चापानि च सबाणानि खड्गांश्च विपुलाञ्शितान् ४
प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः
अब्रुवन्रावणं सर्वे प्रदीप्ता इव तेजसा ५
अद्य रामं वधिष्यामः सुग्रीवं च सलक्ष्मणम्
कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता ६
तान्गृहीतायुधान्सर्वान्वारयित्वा विभीषणः
अब्रवीत्प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ७
अप्युपायैस्त्रिभिस्तात योऽथ प्राप्तुं न शक्यते
तस्य विक्रमकालांस्तान्युक्तानाहुर्मनीषिणः ८
प्रमत्तेष्वभियुक्तेषु दैवेन प्रहतेषु च
विक्रमास्तात सिध्यन्ति परीक्ष्य विधिना कृताः ९
अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम्
जितरोषं दुराधर्षं प्रधर्षयितुमिच्छथ १०
समुद्रं लङ्घयित्वा तु घोरं नदनदीपतिम्

कृतं हनुमता कर्म दुष्करं तर्कयेत कः ११
बलान्यपरिमेयानि वीर्याणि च निशाचराः
परेषां सहसावज्ञा न कर्तव्या कथंचन १२
किं च राक्षसराजस्य रामेणापकृतं पुरा
आजहार जनस्थानाद्यस्य भार्यां यशस्विनः १३
खरो यद्यतिवृत्तस्तु रामेण निहतो रणे
अवश्यं प्राणिनां प्राणा रक्षितव्या यथाबलम् १४
एतन्निमित्तं वैदेहीभयं नः सुमहद्भवेत्
आहृता सा परित्याज्या कलहार्थे कृते न किम् १५
न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना
वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली १६
यावन्न सगजां साश्वां बहुरत्नसमाकुलाम्
पुरीं दारयते बाणैर्दीयतामस्य मैथिली १७
यावत्सुघोरा महती दुर्धर्षा हरिवाहिनी
नावस्कन्दति नो लङ्कां तावत्सीता प्रदीयताम् १८
विनश्येद्धि पुरी लङ्का शूराः सर्वे च राक्षसाः
रामस्य दयिता पत्नी न स्वयं यदि दीयते १९
प्रसादये त्वां बन्धुत्वात्कुरुष्व वचनं मम
हितं पथ्यं त्वहं ब्रूमि दीयतामस्य मैथिली २०
पुरा शरत्सूर्यमरीचिसंनिभा
न्नवाग्रपुङ्खान्सुदृढान्नृपात्मजः
सृजत्यमोघान्विशिखान्वधाय ते
प्रदीयतां दाशरथाय मैथिली २१
त्यजस्व कोपं सुखधर्मनाशनं
भजस्व धर्मं रतिकीर्तिवर्धनम्
प्रसीद जीवेम सपुत्रबान्धवाः
प्रदीयतां दाशरथाय मैथिली २२

इति श्रीरामायणे युद्धकाण्डे नवमः सर्गः ९

६-१०

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम्
अब्रवीत्परुषं वाक्यं रावणः कालचोदितः १
वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण वा
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना २
जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ३
प्रधानं साधकं वैद्यं धर्मशीलं च राक्षस
ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ४
नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः
प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ५
श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित्
पाशहस्तान्नरान्दृष्ट्वा शृणु तान्गदतो मम ६
नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः
घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ७
उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः
कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ८
विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ९
ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः
एश्वर्यमभिजातश्च रिपूणां मूर्ध्नि च स्थितः १०
अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर
अस्मिन्मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ११
इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः
उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः १२
अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः
अन्तरिक्षगतः श्रीमान्भ्रातरं राक्षसाधिपम् १३
स त्वं भ्रातासि मे राजन्ब्रूहि मां यद्यदिच्छसि
इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव १४
सुनीतं हितकामेन वाक्यमुक्तं दशानन

न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः १५
सुलभाः पुरुषा राजन्सततं प्रियवादिनः
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः १६
बद्धं कालस्य पाशेन सर्वभूतापहारिणा
न नश्यन्तमुपेक्षेयं प्रदीप्तं शरणं यथा १७
दीप्तपावकसंकाशैः शितैः काञ्चनभूषणैः
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः १८
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः १९
आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम्
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना २०
निवार्यमाणस्य मया हितैषिणा
न रोचते ते वचनं निशाचर
परीतकाला हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितम् २१
इति श्रीरामायणे युद्धकाण्डे दशमः सर्गः १०

६-११

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः
आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः १
तं मेरुशिखराकारं दीप्तामिव शतह्रदाम्
गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः २
तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वानराधिपः
वानरैः सह दुर्धर्षश्चिन्तयामास बुद्धिमान् ३
चिन्तयित्वा मुहूर्तं तु वानरांस्तानुवाच ह
हनूमत्प्रमुखान्सर्वानिदं वचनमुत्तमम् ४
एष सर्वायुधोपेतश्चतुर्भिः सह राक्षसैः
राक्षसोऽभ्येति पश्यध्वमस्मान्हन्तुं न संशयः ५
सुग्रीवस्य वचः श्रुत्वा सर्वे ते वानरोत्तमाः
सालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ६

शीघ्रं व्यादिश नो राजन्वधायैषां दुरात्मनाम्
निपतन्तु हताश्चैते धरग्यामल्पजीविताः ७
तेषां संभाषमाणानामन्योन्यं स विभीषणः
उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ८
उवाच च महाप्राज्ञः स्वरेण महता महान्
सुग्रीवं तांश्च संप्रेन्द्य खस्थ एव विभीषणः ९
रावणो नाम दुर्वृत्तो राज्ञसो राज्ञसेश्वरः
तस्याहमनुजो भ्राता विभीषण इति श्रुतः १०
तेन सीता जनस्थानाद्धृता हत्वा जटायुषम्
रुद्धा च विवशा दीना राज्ञसीभिः सुरज्ञिता ११
तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम्
साधु निर्यात्यतां सीता रामायेति पुनः पुनः १२
स च न प्रतिजग्राह रावणः कालचोदितः
उच्यमानो हितं वाक्यं विपरीत इवौषधम् १३
सोऽह परुषितस्तेन दासवच्चावमानितः
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः १४
सर्वलोकशरग्याय राघवाय महात्मने
निवेदयत मां ज्ञिप्रं विभीषणमुपस्थितम् १५
एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः
लन्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् १६
रावणस्यानुजो भ्राता विभीषण इति श्रुतः
चतुर्भिः सह रज्ञोभिर्भवन्तं शरणं गतः १७
रावणेन प्रणिहितं तमवेहि विभीषणम्
तस्याहं निग्रहं मन्ये ज्ञमं ज्ञमवतां वर १८
राज्ञसो जिह्मया बुद्ध्या संदिष्टोऽयमुपस्थितः
प्रहर्तुं मायया छन्नो विश्वस्ते त्वयि राघव १९
वध्यतामेष तीव्रेण दराडेन सचिवैः सह
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः २०
एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् २१

सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महाबलः
समीपस्थानुवाचेदं हनूमत्प्रमुखान्हरीन् २२
यदुक्तं कपिराजेन रावणावरजं प्रति
वाक्यं हेतुमदत्यर्थं भवद्भिरपि तच्छ्रुतम् २३
सुहृदा ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता
समर्थेनापि संदेष्टुं शाश्वतीं भूतिमिच्छता २४
इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः
सोपचारं तदा राममूचुर्हितचिकीर्षवः २५
अज्ञातं नास्ति ते किंचित्त्रिषु लोकेषु राघव
आत्मानं पूजयन्राम पृच्छस्यस्मान्सुहृत्तया २६
त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः
परीक्ष्यकारी स्मृतिमान्निसृष्टात्मा सुहृत्सु च २७
तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव
हेतुतो मतिसम्पन्नाः समर्थाश्च पुनः पुनः २८
इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः
विभीषणपरीक्षार्थमुवाच वचनं हरिः २९
शत्रोः सकाशात्संप्राप्तः सर्वथा शङ्क्य एव हि
विश्वासयोग्यः सहसा न कर्तव्यो विभीषणः ३०
छादयित्वात्मभावं हि चरन्ति शठबुद्धयः
प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान्भवेत् ३१
अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह
गुणतः संग्रहं कुर्याद्दोषतस्तु विसर्जयेत् ३२
यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम्
गुणान्वापि बहूञ्ज्ञात्वा संग्रहः क्रियतां नृप ३३
शरभस्त्वथ निश्चित्य सार्थं वचनमब्रवीत्
क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ३४
प्रणिधाय हि चारेण यथावत्सूक्ष्मबुद्धिना
परीक्ष्य च ततः कार्यो यथान्यायं परिग्रहः ३५
जाम्बवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः
वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ३६

बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः
अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयम् ३७
ततो मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः
वाक्यं वचनसम्पन्नो बभाषे हेतुमत्तरम् ३८
वचनं नाम तस्यैष रावणस्य विभीषणः
पृच्छ्यतां मधुरेणायं शनैर्नरवरेश्वर ३९
भावमस्य तु विज्ञाय ततस्तत्त्वं करिष्यसि
यदि दुष्टो न दुष्टो वा वुद्धिपूर्वं नरर्षभ ४०
अथ संस्कारसम्पन्नो हनूमान्सचिवोत्तमः
उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ४१
न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम्
अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ४२
न वादान्नापि संघर्षान्नाधिक्यान्न च कामतः
वक्ष्यामि वचनं राजन्यथार्थं राम गौरवात् ४३
अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव
तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते ४४
ऋते नियोगात्सामर्थ्यमवबोद्धुं न शक्यते
सहसा विनियोगो हि दोषवान्प्रतिभाति मे ४५
चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव
अर्थस्यासंभवात्तत्र कारणं नोपपद्यते ४६
अदेशकाले संप्राप्त इत्ययं यद्विभीषणः
विवक्षा चात्र मेऽस्तीयं तां निबोध यथामति ४७
स एष देशः कालश्च भवतीह यथा तथा
पुरुषात्पुरुषं प्राप्य तथा दोषगुणावपि ४८
दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि
युक्तमागमनं तस्य सदृशं तस्य बुद्धितः ४९
अज्ञातरूपैः पुरुषैः स राजन्पृच्छ्यतामिति
यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता ५०
पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान्वचः
तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम् ५१

अशक्यः सहसा राजन्भावो वेत्तुं परस्य वै
अन्तःस्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम् ५२
न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता
प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ५३
अशङ्कितमतिः स्वस्थो न शठः परिसर्पति
न चास्य दुष्टा वाक्चापि तस्मान्नास्तीह संशयः ५४
आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम्
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ५५
देशकालोपपन्नं च कार्यं कार्यविदां वर
सफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ५६
उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम्
वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् ५७
राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः
एतावत्तु पुरस्कृत्य युज्यते त्वस्य संग्रहः ५८
यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति
त्वं प्रमाणं तु शेषस्य श्रुत्वा बुद्धिमतां वर ५९
इति श्रीरामायणे यद्धकाण्डे एकादशः सर्गः ११

६-१२

अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् १
ममापि तु विवक्षास्ति काचित्प्रति विभीषणम्
श्रुतमिच्छामि तत्सर्वं भवद्भिः श्रेयसि स्थितैः २
मित्रभावेन संप्राप्तं न त्यजेयं कथंचन
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ३
रामस्य वचनं श्रुत्वा सुग्रीवः प्लवगेश्वरः
प्रत्यभाषत काकुत्स्थं सौहार्देनाभिचोदितः ४
किमत्र चित्रं धर्मज्ञ लोकनाथशिखामणे
यत्त्वमार्यं प्रभाषेथाः सत्त्ववान्सत्पथे स्थितः ५
मम चाप्यन्तरात्मायं शुद्धं वेत्ति विभीषणम्

अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः ६
तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव
विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ७
स सुग्रीवस्य तद्वाक्यं रामः श्रुत्वा विमृश्य च
ततः शुभतरं वाक्यमुवाच हरिपुंगवम् ८
सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः
सूक्ष्ममप्यहितं कर्तुं ममाशक्तः कथंचन ९
पिशाचान्दानवान्यक्षान्पृथिव्यां चैव राक्षसान्
अङ्गुल्यग्रेण तान्हन्यामिच्छन्हरिगणेश्वर १०
श्रूयते हि कपोतेन शत्रुः शरणमागतः
अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ११
स हि तं प्रतिजग्राह भार्याहर्तारमागतम्
कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः १२
ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा
शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना १३
बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम्
न हन्यादानृशंस्यार्थमपि शत्रुं परंतप १४
आर्तो वा यदि वा दृप्तः परेषां शरणं गतः
अरिः प्राणान्परित्यज्य रक्षितव्यः कृतात्मना १५
स चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति
स्वया शक्त्या यथासत्त्वं तत्पापं लोकगर्हितम् १६
विनष्टः पश्यतस्तस्य रक्षिणः शरणागतः
आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः १७
एवं दोषो महानत्र प्रपन्नानामरक्षणे
अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् १८
करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम्
धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदये १९
सकृदेव प्रपन्नाय तवास्मीति च याचते
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम २०
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया

विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् २१
ततस्तु सुग्रीववचो निशम्य त
द्धरीश्वरेणाभिहितं नरेश्वरः
विभीषणेनाशु जगाम संगमं
पतत्त्रिराजेन यथा पुरंदरः २२
इति श्रीरामायणे यद्धकाण्डे द्वादशः सर्गः १२

६-१३
राघवेणाभये दत्ते संनतो रावणानुजः
खात्पपातावनिं हृष्टो भक्तैरनुचरैः सह १
स तु रामस्य धर्मात्मा निपपात विभीषणः
पादयोः शरणान्वेषी चतुर्भिः सह राक्षसैः २
अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः
धर्मयुक्तं च युक्तं च साम्प्रतं संप्रहर्षणम् ३
अनुजो रावणस्याहं तेन चास्म्यवमानितः
भवन्तं सर्वभूतानां शरण्यं शरणं गतः ४
परित्यक्ता मया लङ्का मित्राणि च धनानि च
भवद्गतं मे राज्यं च जीवितं च सुखानि च ५
राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे
करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ६
इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम्
अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ७
तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम्
राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ८
एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम्
मध्ये वानरमुख्यानां राजानं रामशासनात् ९
तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवंगमाः
प्रचुक्रुशुर्महानादान्साधु साध्विति चाब्रुवन् १०
अब्रवीच्च हनूमांश्च सुग्रीवश्च विभीषणम्
कथं सागरमक्षोभ्यं तराम वरुणालयम् ११

उपायैराभिगच्छामो यथा नदनदीपतिम्
तराम तरसा सर्वे ससैन्या वरुणालय् १२
एवमुक्तस्तु धर्मज्ञः प्रत्युवाच विभीषणः
समुद्रं राघवो राजा शरणं गन्तुमर्हति १३
खानितः सगरेणायमप्रमेयो महोदधिः
कर्तुमर्हति रामस्य ज्ञातेः कार्यं महोदधिः १४
एवं विभीषणेनोक्ते राक्षसेन विपश्चिता
प्रकृत्या धर्मशीलस्य राघवस्याप्यरोचत १५
स लक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरम्
सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमुवाच ह १६
विभीषणस्य मन्त्रोऽय मम लक्ष्मण रोचते
ब्रूहि त्वं सहसुग्रीवस्तवापि यदि रोचते १७
सुग्रीवः पण्डितो नित्यं भवान्मन्त्रविचक्षणः
उभाभ्यां संप्रधार्यार्थं रोचते यत्तदुच्यताम् १८
एवमुक्तौ तु तौ वीरावुभौ सुग्रीवलक्ष्मणौ
समुदाचारसंयुक्तमिदं वचनमूचतुः १९
किमर्थं नो नरव्याघ्र न रोचिष्यति राघव
विभीषणेन यत्तूक्तमस्मिन्काले सुखावहम् २०
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन्वरुणालये
लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः २१
विभीषणस्य शूरस्य यथार्थं क्रियतां वचः
अलं कालात्ययं कृत्वा समुद्रोऽय नियुज्यताम् २२
एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः
संविवेश तदा रामो वेद्यामिव हुताशनः २३
इति श्रीरामायणे यद्धकाराडे त्रयोदशः सर्गः १३

६-१४

तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले
नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः १
न च दर्शयते मन्दस्तदा रामस्य सागरः

